## ग्रन्थ-परिचयः

खीष्टाब्दस्य चतुर्दशे शतके मिथिलायां प्रादुर्भूतेन महाकविविद्यापतिना मिथिलाभाषायां प्रणीतानि भक्तिशृङ्गार-वैराग्यसम्भृतानि गीतानि प्राच्यभारतीय जनपदेषु अद्यावधि नितरां समादरास्पदं पदमधिशेरते। मिथिलाभाषावबोधविधुराणां संस्कृतज्ञानां महाकविविद्यापतिरचित-गीतजात-निहितभाव सम्पत्परिचयार्थं ग्रन्थेऽस्मिन् शत-सङ्ख्यकानां सपरिशिष्टानां तदीयगीतानां संस्कृत-भाषामाश्रित्य आर्याजातिनिबद्धो भावानुवादः महाकवेः कवित्व-प्रकर्षस्य कामपि कान्तिं समुन्मीलयितुं प्रयतते।

ISBN-81-85078-86-6




नामित पुरस्कार हेतु समर्पित

1 पुस्तक-नाम - विद्यापति-शतकम्
[ महाकवि विद्यापति के मैथिली भाषा में रचित गीतों में से १०० गीतों का आर्या छन्द में संस्कृत-भावानुवाद ]

2 अनुवादक का नाम - काशीनाथ मिश्र

3 वयस - 64 वर्ष

4 पता - B-2/1, प्रोफेसर्स कालोनी
सैदपुर, पटना-16

5 पुस्तक प्रकाशन वर्ष - 1992

# Vidyapati-Satakam




*By*

**Kashinath Mishra**

**Janaki Prakashan**

PATNA-DELHI

*Published by :*
Nandkishor Singh
Janaki Prakashan
Ashok Raj Path, Chauhatta,
Patna-800 004

Branch
3A, Veer Sawarkar Block
Madhuban Road,
Shakarpur, Delhi-110092


1st Published 1992

I S B N—81-85078—86-6.

# विद्यापतिशतकम्



मिश्रोपाह्वेन श्रीकाशिनाथशर्म्मणा
विरचितम्

जानकी-प्रकाशन
पटना-दिल्ली

प्रकाशक :
नन्दकिशोर सिंह
जानकी प्रकाशन
अशोक राजपथ
चौहट्टा,
पटना ८००००४

3ए-वीर सावरकर ब्लोक
मधुवन रोड, शकरपुर
दिल्ली-110092

संस्करण : प्रथम

ISBN 81-85078–86-6

मुद्रक
सुनील मुद्रणालय
मुसल्लहपुर, पटना–800 006




श्रीः ॥

# भूमिका

राधा- माधव - लीला —
गीतैः सम्मोहितं जगद् येन ।
स विजयते विद्यापति—
रनिशं कविशेखरो वन्द्यः ॥

मैथिल - कवि - कोकिलः सदुपाध्यायो महाकविर्विद्यापतिः ख्रीष्टाब्दस्य चतुर्दश्याः शताब्द्याश्चतुर्थ-चरणारम्भकाले व्योमबाणाग्निविधु-सम्मित-वर्षसन्निकर्षे मिथिलायां जन्म-परिग्रहं चकार। असौ महाकविः सकल-विद्यास्थानावगाहन-परिपूतेन अप्रतिमेन प्रज्ञावैभवेन, नीति-शास्त्र-प्रयोग-वैशारद्येन, स्मार्त्तकर्मानुष्ठान-विधान-दाक्ष्येण, दायभाग-व्यवस्थापन-पाटवेन, स्वकाल-समुद्भूत-पतनोन्नति-बन्धुर-राजतन्त्र-स्थिति-साक्षात्कार - समुदित- कालोचित-व्यवहार - निर्वाह - प्रावण्येन, अमन्दानन्दमय - रस -प्रस्रवणायमान-मिथिलाभाषामय - गीत - विरचन - नैपुण्येन च प्राच्यभारतभूभागस्य मध्यकालावधिवर्त्तिनि पुरावृत्ते नितरामसाधारणं महिमातिशयं पुष्णाति ।

महाकविनामुना संस्कृतभाषामाश्रित्य प्रणीतेषु विविधविषयावगाहिषु ग्रन्थरत्नेषु सत्स्वपि एतदीयै-र्मिथिलाभाषामयैर्गीतनिवहै-रस्य महाकवित्वं पुरातनादेव कालात् परं प्रथिमानमञ्चन्ती अद्यापि भाषाकाव्यविदां सचेतसां गोष्ठीषु सशिरःकम्पं श्लाध्यमाना परं प्रशंसास्पदं पदमधिशेते ।

कीर्त्तिः

तथा हि गीतानामेतदीयानामन्तस्तलेषु संसर्पन्ती सकल-सहृदय-जनमनोहारिणी दिव्यमाधुर्यरसोच्छला भावधारा सरल-सरस-पदसन्दर्भण-समुल्लसित-कर्णामृतायमान-ध्वनि-माधुर्य-महिम्ना समग्रं-प्राच्यभारत-भूभागं कालक्रमेण समाप्लावयदिति सुविदितमेव

तद्विदाम् । श्रूयते चात्र यत् प्रातः स्मरणीयः श्रीकृष्णावतारस्वरूपो भगवद्भक्तप्रवरः श्रीचैतन्यदेवोऽ येतदीयम्

"जनम अवधि हम रूप निहारल
नयन न तिरपित भेल ।"

जन्मावधि ननु रूपं सावहिताहं व्यलोकयं कामम् ।
आभ्यां मम नयनाभ्यां तथापि तृप्तिर्न सम्प्राप्ता ।।
(संस्कृतच्छाया)

इति गीतं सभुजोत्क्षेपं पौनःपुन्येन गायन् भक्तिभावामृताम्भोधौ निमग्नो देहातीतां दिव्यभावोन्मादमयीं मनोदशामनुभवति स्म । अनेनैतदीयानां गीतानां किमप्यलौकिकं माहात्म्यमाञ्जस्येनैव प्रकाशमुपयाति । इत्थं पाण्डित्य-वैदग्ध्ययोर्मणिकाञ्चनयोरिवैकत्र स्पृहणीयं सद्भावमवाप्य विद्यापतेः काव्यसौन्दर्यं कालवातेनानाहार्येण तपस्तेजः-स्फुरितेन दिव्येन प्रभामण्डलेन विराजमानं सदद्यापि निर्मलमुकुरोदरप्रख्येषु सतां मानसेष्वाञ्जस्येनैवान्तः-प्रवेशमवाप्य कामपि कमनीयां कान्तिमातनुते ।

अथेदानीमस्य महाकवेर्विद्यापतेः प्रसङ्गक्रमागतं जीवनवृत्तं विनिवेदनीयं विद्यते । तस्य च सम्यगवबोधाय तदुपन्यासात् प्राक् तदीयवंशप्रभवा ये ये महापुरुषाः यैः यैर्नृपतिभिः स्व-स्व-मन्त्रि-मण्डले ससम्मानं विविधाधिकारेषु नियोगभाजः कृतास्तेषां तेषां परिचयसूत्रमिह समासतः प्रस्तूयते । तथा हि ऋषिनन्द-व्योमेन्दु मितात् (1097 A. D.) ख्रीष्टाब्दादारम्य अब्धिनेत्रवह्निविधुमितं (1324 A.D.) ख्रीष्टाब्दं यावन्मिथिलायां सुप्रथितयशसां कार्णाट-महीपतीनां साम्राज्यं व्यभासत । तत्र च न्याय्येन मार्गेण मिथिलामहीं परिपालयन्तो नान्यदेव-मल्लदेव-गङ्गदेव-नरसिंहदेव-रामसिंहदेव - शक्रसिंहदेव - हरिसिंहदेवनामानः प्राज्यविक्रमशालिनो वर्णाश्रमव्यवस्थापनपरायणाः प्रजारञ्जनलब्धवर्णाः सुधीवृन्द-संरक्षण-विश्रुतचरिताः परमोदाराशया महीभृत्प्रवराः प्रादुरासन् । ततो दैवदुर्विपाकात् प्रबलबलै-स्तुलुष्कैः प्रथमतः समग्रमुदीच्यं भारतं पाणिसात्कर्त्तुकामैः कालक्रमेणास्तंगमिते कार्णाटसाम्राज्यभास्करे तुलुष्काणामप्रतिहतं शासनं मिथिलायां स्थेमानमलभत । अथ




तुलुष्काधिष्ठितायां मिथिलायां गयासुद्दीन-तुगलकनाम्ना प्रथितः सुरत्राण-प्रवरः कर्मकाण्डोदिताचार[illegible] परमेश्वरीसपर्याधिगतदिव्यसिद्धिवैभवं - तान्त्रिक - क्रिया कलापानुष्ठाननिरतं मैथिलविप्रवंशावतंसं कामेश्वर - ठक्कुर इत्याख्यया लोकविश्रुतं सिद्धर्षिप्रवरं राज्य-लोभपराङ्मुखमपि कथञ्चिदनुनीय तुलुष्कसाम्राज्यस्य करदभूपतित्वेन मिथिला-देशस्य प्रशासनभारं निर्वोढुं तं स्वप्रणयवशम्वदं व्यधात्। तस्माच्च सुगृहीतनामधेयात् कामेश्वरठक्कुरात् प्रावर्त्तत बिमलो वंशः विद्यावदातचरितानाम्, इष्टापूर्त्तकृत्यनिरतानाम्, रणधुरन्धराणाम्, दानसम्मानपरितोषित-कोविदानाम्, गुणग्रामविद्योतित-दिगन्तराणां मैथिलसद्विप्रभू-पतीनाम्। यत्र च कालेन समुदपद्यन्त विविधविरुदावली-विभूषिताः भोगेश्वर - गणेश्वर - कीर्त्तिसिंह - भवसिंह- देवसिंह-शिवसिंह-लखिमा-देवी-पद्मसिंह-विश्वासदेवी-नरसिंह-धीरसिंह - भैरवसिंह - रामभद्रदेव-लक्ष्मीनाथ-देवप्रभृतयो राजानः। राज्ञामेषां सौराज्यकाले मिथिलायां संस्कृतविद्यास्थानेषु विशेषतो दर्शनशास्त्रस्य, स्मार्त्त-निबन्ध-ग्रन्थ-रत्नजातस्य, काव्य - नृत्य - सङ्गीत-प्रभृति-कलाकलापस्य च कोऽपि विशिष्टो व्यजृम्भत विकासोल्लासमयः समयः। यत्र च काले काले राज्यलोभ-विवशीकृतस्वान्तैः अन्तः - कलहपरामृष्टैः सुरत्राणैरसकृत् प्रवर्त्तितानाम् युद्धयात्राणां श्रवणोद्वेगकारिभिर्मनः - संक्षोभ-जननैर्वधबन्धादिदारुणक्लेशपिशुनैस्तूर्यनिर्घोषैराध्मातेऽपि व्योमा-वकाशे यावज्जीवं सारस्वतं व्रतं परिपालयन्तोऽनन्यचेतसः सन्तोषधना मैथिलविपश्चित्प्रवराः स्वप्रतिभाप्रसादाधिगतं शास्त्रतत्त्वं नाना-निबन्धेष्वाधाय मिथिलायाः सारस्वतीमपरिमेयां सम्पदमधिभुवनं प्राकाश्यमानिन्युः।

इत्थं विद्याविनोदव्यासङ्गलीनैः पण्डितप्रकाण्डैरधिष्ठितायां भूसुरभूपतिसौराज्य - प्रमुदितायां मिथिलायाम् अस्माकं महाकवि-विद्यापतिर्यस्मिन् सद्विप्रवंशे जनिमुपलेभे तत्र सम्भूताः खल्वस्य पूर्वजाः मिथिलेश्वराणां कार्णाटमहीभुजां विविधेषु महत्त्वपूर्णेषु राज्याधिकारपदेषु नियोगभाजोऽभवन्। यत्र नियुक्तास्ते महापुरुषाः स्वं स्वं नियोगं साधु निर्वहन्तो नयोपायकौशलेन, नयापनयसूक्ष्मे-

क्षिकया, षाड्गुण्यप्रयोगवैशारद्येन समरव्यूह - विधाननैपुण्येन, वापीकूपतडाग-देवालयाराम-परम्परानिर्माण-व्यसनेन, विद्यास्थानेषु च तेषु तेषु त्रयीप्रमुखेषु पुराणन्यायमीमांसाधर्मशास्त्रादिषु समासादितागाधपाण्डित्येन, विविधनिबन्धप्रबन्धप्रख्यापितवैदुष्य-प्रकर्षेण नानादिग्दिगन्तागत - विद्वज्जनसम्मानदानाभिरुचिरोचिष्णु-स्वभावेन दिङ्मण्डले शरदिन्दुधवलां कीर्त्ति - कौमुदीमातन्वाना नितरां विख्यातिभाजनान्यभवन् । यत् सत्यं व्यतीतेऽपि बहुतिथे काले महनीयैरेभिर्गुणोत्करैरिदानीमपि तेषां स्मृतिः जनकजनपदमधिवसतां जनानां मानसेषु लोकम्पृणं किमपि सौरभम् आतनुते ।

एवमसाधारणगुणग्रामाभिनन्दिते श्री-सरस्वत्योः सुदुर्लभेन अन्योन्यानुराग - प्रवणेन सहवासेन समलङ्कृते महति सद्विप्रकुले प्रादुर्भावमुपेतस्य अस्य महाकवेर्वंश - परिचयो मिथिलादेशीय-पञ्जीप्रबन्धोक्तदिशा जिज्ञासूनामौत्सुक्यविनोदाय अधस्तादुपन्यस्यते ।

तथा हि वंशस्यास्य प्रथमः पुरुषो विष्णुदत्तठक्कुरः प्रथमस्य कार्णाटनरेशस्य श्रीमन्नान्यदेवस्य सम्मानपात्रमभूदिति श्रूयते । ततश्च तदीयतनयस्य हरादित्य - ठक्कुरस्य पुत्रः कर्मादित्यठक्कुरो नाम विसफीतिसञ्ज्ञके मिथिलादेशस्थिते ग्रामे कृतवसतिरस्माकं परिचयसरणिमवतरति । अनेन कर्मादित्यठक्कुरेण कार्णाटनरेशस्य मन्त्रिपदमलङ्कुर्वता देवी-मन्दिरमेकं हावीडीहाभिधे पत्तने निर्मापित-मित्यधस्तन-शिलालिपिविन्यस्तश्लोकसाक्ष्यानुरोधादवगम्यते—

"अब्दे नेत्रशशाङ्कपक्षगदिते श्रीलक्ष्मणक्ष्मापते-
र्मासि श्रावणसञ्ज्ञके मुनितिथौ स्वात्यां गुरौ शोभने ।
हावीपट्टनसञ्ज्ञके सुविदिते हैहट्टदेवी शिवा
कर्मादित्यसुमन्त्रिणेह विहिता सौभाग्यदेव्याज्ञया ॥"

श्लोकेऽस्मिन् निर्दिष्टं तिथिक्रमं प्रति सावेशं दत्तदृष्टयः केचन पुराविदोऽनेन कर्मादित्येन मन्त्रिणा कृतायामस्य देवीमन्दिरस्य प्रतिष्ठायां सन्देहमातन्वानाः केनाप्यन्येन कर्मादित्यनामकेन मन्त्रिणा देवीमन्दिरमिदं निर्मापितमिति स्वमतं साग्रहमुद्घोपयन्ति । परन्तु सम्प्रदायानुरोधिनो मैथिलविद्वांसो मतमेतदीयं नाद्रियन्ते । वर्तुलीक्रियतेऽत्रैवेयं विवादकन्था ।

अस्य किल कर्मादित्यठक्कुरस्य तनयो देवादित्यठक्कुरः कार्णाटनरेशस्य शक्रसिंहदेवस्य सान्धिविग्रहिकपदं विभूषयामास। दिव्य-सिद्धिसम्पन्नोऽसौ महापुरुषः श्रीसरस्वत्योरेकायनीभूतः समर-कुशलो वदान्यशिरोमणिश्चासीत्। अमुष्य पौत्रेण चण्डेश्वरेण विरचितमधस्तनं श्लोककदम्बकमेतदीयं चरित्रमाहात्म्यमित्थं विशदयति—

आसीन्मैथिल-तीरभुक्तिविषये मन्त्रप्रभावाहत—
प्रत्यर्थिक्षितिपालकान्धतमसश्चक्रो द्विजानां प्रियः।
नित्योल्लासितमण्डलः सुमनसामर्घ्यश्च पद्माश्रयो
देवादित्य इति त्रिलोकमहितो मन्त्रीन्द्रचूडामणिः॥

स्रष्टासौ राजलक्ष्म्याः सचिवकुलगुरुस्तेजसा विश्वसाक्षी
दीनानाथानुकम्पापरवशहृदयो जङ्गमः पारिजातः।
दृप्यत्सेनापतीनामपथगतिमतां बुद्धिसिन्धोरगस्त्यो
हम्वीरध्वान्तभानुर्निखिलनिजगुणैस्तोषयामास विश्वम्॥

महादानैस्तैस्तैर्विभवमहितैर्नन्दितमभूत्
कुलं भूदेवानां बहुविधमखैस्तैर्मखभुजाम्।
तडागैरारामैः कमलमधुपानोन्मदनदद्—
द्विरेफश्रेणीनामुपकृतमनेन क्षितितलम्॥

अस्येत्थं महामहिमशालिनो देवादित्य-ठक्कुरस्य बभूवुः प्रभूतास्तनयाः-वीरेश्वर-धीरेश्वर-गणेश्वर-प्रमुखाः। तत्र वीरेश्वर-ठक्कुरो महामहत्तकविरुदप्रथितः प्रथमं कार्णाटनरेशस्य शक्रसिंहस्य मन्त्रिपदं ततश्च महाराजहरिसिंहदेवस्य सान्धिविग्रहिकपदं विभूषयामास। अस्य भ्राता धीरेश्वरठक्कुरोऽप्रतिमपाण्डित्यो महावार्तिकनैबन्धिक इति विश्रुतो बभूव। अस्यानुजो गणेश्वर-ठक्कुरश्च साङ्ख्य - सिद्धान्त - निष्णातो दण्डनीतिवैशारद्येन प्रत्युत्पन्नमतित्वेन च सुप्रथितः कार्णाटमहीपतेर्हरिसिंहदेवस्य मन्त्रि पदमध्यासीनो दिगन्तविसृत्वरीं कीर्त्तिमर्जयामास। अस्य कनीयांस्त-नयो गोविन्ददत्तो गोविन्दमानसोल्लासाख्ये स्वग्रन्थे तातपादानां प्रशस्तिमित्थं पल्लवयति—

श्रीमानेष महामहत्तकमहाराजाधिराजो महान्
सामन्ताधिपतिर्विकस्वरयशःपुष्पस्य जन्मद्रुमः ।
चक्रे मैथिलनाथभूमिपतिभिः सप्ताङ्गराज्यस्थितिं
प्रौढानेकवशम्वदैकहृदयो दोःस्तम्भसम्भावितः ॥

अथान्येषु वीरेश्वरभ्रातृषु जटेश्वरो भाण्डागारिकस्य, हरदत्तः स्थानान्तरिकस्य लक्ष्मीदत्तो मुद्राहस्तकस्य शुभदत्तश्च राजवल्लभस्य पदमलञ्चकार। सर्वेषु च भ्रातृषु वीरेश्वरोऽशेषगुणसम्भृतो नितरां ख्यातिमापेदे। एतदीय-प्रशस्तिपराः श्लोकाश्चात्र कोविदानां विनोदायाधस्तात् समुपन्यस्यन्ते —

लक्ष्मीभाजो द्विजेन्द्रानकृत कृतमतिर्यो महादानदानैः
प्रादत्तोच्चैरवामप्रभृतिपुरवरं शासनं श्रोत्रियेभ्यः ।
वापीञ्चक्रेऽब्धिबन्धुं दहिमतनगरे निर्जितानेकदुष्टः
प्रासादस्तेन तुङ्गो व्यरचि सुकृतिना स्वर्गसोपानमार्गः ॥

यः सन्धिविग्रहविधौ विविधानुभावः
शौर्योदयेन मिथिलाधिपराज्यभारम् ।
निर्मत्सरं सुनयसञ्चितकोषजातं
सप्ताङ्ग-सङ्घटन-सम्भृतमेव चक्रे ॥

प्रज्ञावतां सदसि संसदि वाक्पटूनां
राज्ञां सभासु परिषत्स्वपि मन्त्रभाजाम् ।
चित्तेऽर्थिनाञ्च कवितास्वपि सत्कवीनां
वीरेश्वरः स्फुरति विश्वविलासिकीर्त्तिः ॥

इत्थं परमस्पृहणीयगुणराजिविराजितस्य वीरेश्वरठक्कुरस्य तनयश्चण्डेश्वरः प्रथमं कार्णाटनरेशस्य शक्रसिंहदेवस्य ततश्च महाराज-हरिसिंहदेवस्य अमात्यपर्षदि सान्धिविग्रहिकपदं, महासेनाधिपतिपदं, महामात्यपदञ्च स्वकीयैरसाधारणैर्दिव्यानुभावसम्पन्नैर्गुणगणैर्विद्योतयामास ।

अथ कार्णाटचूडामणौ महाराजहरिसिंहदेवे मिथिलामहीं परिपालयति, महामहत्तकचण्डेश्वरमहामात्ये साम्राज्ययोगक्षेमविचिन्तनतत्परे, श्रौतस्मार्त्तकर्मानुष्ठाननिष्ठे च श्रौत्रियवर्गे,

विधानसम्पाद्यमानाध्वरसन्तानसम्प्रीणित - देववृन्दे च यायजूकगणे, स्वाध्यायाभ्यासघोषमुखरीकृतदिगन्तरे च भस्मस्मेरभालोद्भासिनि बटुसमुदाये, वेद-वेदाङ्गस्मृतिन्यायमीमांसादिशास्त्रार्थतत्त्वविश्लेषण-प्रसङ्गोद्भूतस्पर्धाबन्धसमुद्धुरकन्धरे च पण्डितसमाजे, देवातिथि-सपर्यासादरे च सद्गृहस्थ-निवहे, काष्ठाधिरूढां राजभक्तिञ्च बिभ्रति धर्माध्वनीने प्रजावर्गे, धूमकेतुरिव मिथिलाकाशावकाशे सह-सोदितो दुराधर्षो गयासुद्दीनतुगलकाभिधानः सुरत्राणो विपुलबलैः समरोन्मदैस्तुलुष्क-सैन्यैः समं सीमारामगढाभिख्यां दुर्ग-प्रतिष्ठिता-मश्ममयप्रासाद-माला-समलङ्कृतां मिथिलाराजधानीं समाचस्कन्द। ततः सम्प्रवृत्ते लोमहर्षणे समरे कार्णाटराजस्य रणोद्भटापि वाहिनी निष्ठुरनियति-क्रूरेक्षण-क्षुण्ण-पराक्रमा सती भङ्गमुपाजगाम। वार्त्तेयमब्धिनेत्रवह्निविधुर्मितं खीष्टाब्दं (1324 A.D.) संस्पृशति।

ततश्च गत्यन्तराभावात् दुर्दैवकदर्थितो महाराजो हरिसिंहदेवः स्वराजधानीमश्मपुरीतिप्रसिद्धां विहाय चण्डेश्वरस्य महामात्यस्य मन्त्रणाञ्चानुरुध्य अवशिष्टसैन्यवृन्दनेतृत्वतत्परेण च तेन समं तुलुष्कातङ्कपरिवर्जितं सघनवनाच्छन्नाभ्रङ्कषपर्वतमालाविवेष्टितं ग्रावग्राम-प्रस्खलन-वेगोदग्र-मुखर-गिरिसरित्प्रवाहदुर्गमं नेपालदेश-मुद्दिश्य प्रतस्थे। तामिमां विपन्मयीं कालकलां पारम्पर्यक्रमागतोऽय-मधस्तनः श्लोकोऽभिव्यनक्ति—

बाणाब्धिबाहुशशिसम्मितशाकवर्षे
पौषस्य शुक्लनवमीरविसूनुवारे।
त्यक्त्वा स्वपट्टनपुरीं हरिसिंह-देवो
दुर्दैव-देशित-पथो गिरिमाविवेश॥

इत्थं नेपालदेशमुपेत्य समरविशारदश्चण्डेश्वरो महामात्यः स्वकीयेनोग्रपराक्रमप्रकर्षेण तं विजित्य भक्तपुराभिधे पत्तने महाराज-हरिसिंहदेवं भ्रष्टराज्य पुनरपि राज्यश्रीपरिष्वङ्गसौख्यप्रमुदितं व्यधात्। महामात्यस्यास्य चण्डेश्वरस्य नेपालदेशविजिगीषो-त्साहसमुच्छलमानसस्य सैन्याभियानवर्णनपुरस्सरं नेपालविजयो-ल्लेखपरास्तदीये कृत्यरत्नाकराख्ये प्रबन्धे समुपलभ्यनानाः केचन

शौर्योल्लासदीप्तिविद्योतिताः श्लोका जिज्ञासूनां विनोदायात्र समुपन्यस्यन्ते—

यद्यात्रा - चतुरङ्गिणीभरनमत् - पातालपातस्फुटद्-
भोगीन्द्राग्र्यशिरः-फणामणिपतत्-खण्ड - प्रदीपांशुभिः ।
पाताले निपुणान्धकारपटलीनिर्मोषदृष्टप्रियाः
सत्कीर्त्तिं क्षणलब्धलोचनफला गायन्ति भोगिस्त्रियः ॥

उन्मूल्याद्रिनितम्बमम्बरमणिं कृत्वा पताकावृतं
सेनोद्धूत - रजोभरैरनिभृतं भित्वा महाकर्दमम् ।
दुर्गं सत्पथमातनोद् दृढमथो निर्माय दुर्गं पुन-
र्नेपालक्षितिपालवर्गमनयद् दुर्गं समन्तादयम् ॥

आलीनं गिरिकन्दरासु विपिनेष्वन्तर्हितं निर्झरे
गम्भीरे चिरमग्नमद्रिशिखरप्राग्भागमप्यास्थितम् ।
नेपाले विजिते बलेन सुतरां भीतात्मभिर्भूमिपै-
र्विस्मृत्य द्युमणेः कुले भमवतः स्वं जन्म तत्तत्कृतम् ॥

नेपालं गिरिदुर्गमं भुजबलादुन्मूल्य तद्भूपतीन्
सर्वान् राघववंशजान् रविरिपोस्तुल्यः प्रतापानलैः ।
देवं विश्ववरप्रदं पशुपतिं संस्पृश्य योऽपूजयत्
केषां नैष धरातले स्तुतिपदं मन्त्रीन्द्रचण्डेश्वरः ॥

नेपालविजयं विधाय हर्षोल्लासपुलकितेन मनसानेन वदान्यशिरोमणिना महामात्यप्रवरेण पुण्यसलिलाया वाग्वत्याः सरितस्तीरेऽनुष्ठितं काञ्चनमयस्य तुलापुरुषस्य प्रदानकृत्यं श्लोकेऽस्मिन्नधस्तने समुपवर्णितमुपलभ्यते ।

श्रीचण्डेश्वरमन्त्रिणा मतिमतानेन प्रसन्नात्मना
नेपालाखिलभूमिपालजयिना धर्मेन्दुदुग्धाब्धिना ।
वाग्वत्यास्सरितस्तटे सुरधुनीसाम्यं दधत्याः शुचौ
मार्गे मासि शुभे पवित्रसमये दत्तस्तुलापूरुषः ॥

नेपालीयेषु शिलालेखेषु तुलुष्काभिभूतान्मिथिलादेशाद् विप्रोषितस्य महाराजहरिसिंहदेवस्य नेपालदेशाधिपत्यसम्प्राप्तिर्बहुशः पल्लवितोपलभ्यते । ततश्च प्रसङ्गानुरोधात् केचन श्लोका इहोपस्थाप्यन्ते—

वाङ्गालैर्यवनैः क्षुधा विधिवशाद् राज्यं सद्रव्यं हृतं
दुर्गं सीमरनामकं च सहसा नेपालमभ्यागतः।
सोऽयं भूमिपतिश्चकार वसतिं भक्ताख्यपुर्यां रिपून्
हत्वा सम्प्रति शक्तिभक्तिसुदृढो राजाधिराजो महान् ॥

आक्रान्तं यवनैर्भृशं विधिवशात् सोपद्रवं वान्धवैः
सार्द्धं तत्परिहाय चाश्मनगरं नेपालमभ्यागतः।
सोऽत्राधिष्ठितमेदिनीपरिवृढान् निर्धूय दिव्यास्पदं
तेने भक्तपुराह्वयञ्च कलितं हृष्टैश्च पुष्टैर्जनैः ॥

सञ्जातो हरिसिंहदेवनृपतिः प्रोद्यत्प्रतापोन्नति-
वंशे चण्डरुचेरचिन्त्यमहिमा श्रीमैथिलक्ष्माहरिः।
ज्ञात्वा दुर्य्यवनात् कलेरिव निजे राज्ये स्वधर्मक्षतिं
नेपालावनिपीठमेत्य सुचिरं राज्यं चकार प्रभुः ॥

नेपालविजयानन्तरं महामात्येन चण्डेश्वरेण दीर्घदर्शिना कण्टकोद्धरणं विधाय तत्र भक्तपुरप्रासादे महाराजं हरिसिंहदेवं राजसिंहासनेऽभिषिच्य नवार्जितस्य राज्यस्य योगक्षेमविधानं प्रति निरन्तरं जागरुकेण अभूयत। अयं खलु महापुरुषः शस्त्रे शास्त्रे च समर्जितख्यातिर्दण्डनेतृत्वकुशलः युद्धव्यूहविधानकोविदो विकर्त्तन इव प्रत्यर्थिध्वान्त-स्तोम-विकर्त्तनः दुर्जयसमरविजयसमासादितातुलनीय-यशोराशिविभास्वरः शैवमानसोल्लास-कृत्यरत्नाकर-विवादरत्नाकर-शुद्धिरत्नाकर-राजनीतिरत्नाकर - व्यवहाररत्नाकर - गृहस्थरत्नाकर-दानरत्नाकरेति सुप्रसिद्धान् ऐहिकामुष्मिक - पुरुषार्थसार्थं - सम्पादनौपयिकान् प्रबन्धान् निर्माय तुलुष्कसम्पर्क - विसंष्ठुलीकृतानां राजतन्त्र - धर्माचरण - देवपूजन-गृहस्थाचार -व्यवहाराणां संस्कारार्थं समुद्धुर-कन्धरो मिथिलादेशस्य पुरावृत्ते सर्वथानुपमं पदमध्यास्ते।



अतः परं तुलुष्काधिष्ठितायां मिथिलायां सुरत्राणेन करदीकृतानां स्व-राज्यशासन-स्वतन्त्राणां मैथिलसद्विप्र-महीपालानां प्रशासनं यथा लब्धास्पदमभवत् तद्विनिवेदितं प्रागिति नेह पुनः प्रतन्यते। सोऽयं मैथिलराजवंशो मूलग्रामानुरोधान्मैथिलपञ्जीप्रबन्धकृद्भिः ओइनिवार - राजवंशसमाख्यया प्रथामनीयत। मिथिलादेशीय-कर्णाट - राजवंशोद्भवस्य राजवृन्दस्य अधिकारिभूतेषु महाकवि-विद्यापति-पूर्वजेषु महापुरुषेषु अन्तिमस्य महामात्यस्य चण्डेश्वरस्य पितृव्यो बभूव धीरेश्वरठक्कुर इत्यावेदितं प्राक्। अस्य पुत्रो जयदत्त इति नाम्ना ख्यातिमुपजगाम। जयदत्तस्य पुत्रो बभूव गणपतिठक्कुरः सकल-शास्त्रपारदृश्वा यस्य पाण्डित्यप्रकर्षं सुगति-सोपानाख्यस्तद्विनिर्मितो निबन्धः प्रमाणयति। अयमेव सौभाग्यशाली महापुरुषः व्योमबाणाग्निविधुमिते ख्रीष्टाब्दे स्वधर्मपत्न्यां गङ्गादेव्यां स्वेष्टदेवतागुरुप्रसादमहिम्ना विद्यापतिनामानं यशस्करं तनयमुपलेभे।

बाल्यकालादेव विद्यापतेः प्रसृत्वरी प्रतिभा प्रकाशमुपाजगाम। महामहोपाध्यायपदवीविभूषितात् पण्डितप्रवरहरिमिश्रात् पद-वाक्य-प्रमाणशास्त्राणि समधीत्य स्मृतिपुराणाख्यायिकेतिहास-नाट्य-काव्य-सङ्गीतादिषु नितरामप्रतिहतगतिरसौ जन्मान्तरार्जित - संस्कार-परिपाक-वशादखिलं शास्त्रतत्त्वमाञ्जस्येनैव जग्राह। एतदीया वैपश्चिती न केवलं दुरूहशास्त्रतत्त्वावबोधमात्रेण कृतार्थतामन्यत किन्तु तदानीन्तनस्य स्थैर्यविधुरस्य राजतन्त्रस्य छायातप-शबलितेन चङ्क्रमणेन परामृष्टं जनजीवनं प्रत्यपि साभिनिवेशं दत्तेक्षणत्वाद् वर्णवैविध्योपरागसङ्क्रान्ति-समनुरञ्जितं लोकपक्षमपि कुक्षीकृत्य परभागलाभात् परं समुद्भासमाना किमप्यसामान्यं वैलक्षण्यं पुष्णाति। अस्य खलु चिरजीवित्वात् 'ओइनिवार'—वंशोद्भवानां प्रभूतानां सद्विप्रभूपतीनां चरितैः सहानुविद्धमेव एतदीयं जीवनचरितं ग्रन्थजातं चोपलभ्यते। तस्मात् साहित्य - सङ्गीत-शास्त्रचर्चामुखरैरपि काले काले दुर्मदतुलुष्क - शासनाधिकृत - प्रवर्त्तितोत्पीडन-परामृष्टैर्विविध-मैथिलमहीपति-प्रशासनवृत्तान्तैः सममेवास्य महाकवेर्जीवनवृत्तचर्चा प्रस्तुतिमर्हति।

विद्यापतेः पिता गणपतिठक्कुरः ओइनिवारवंशोद्भवानां मैथिल-सद्विप्रनृपतीनां मूर्धाभिषिक्तस्य सिद्धपुरुषकामेश्वरपौत्रस्य महाराजभोगीश्वरपुत्रस्य महाराजगणेश्वरस्य सभायां राजपण्डित-पदमलङ्करोति स्म। ततश्चायं बाल्यकालादेव तातपादेन समं राज-कुले गतागतं कुर्वाणो राजोचिताचारेषु, दण्डनीतिसमीक्षणेषु, व्यवहारदर्शनेषु, वाद्यनृत्यसङ्गीतकाव्यालापादि - कलाकलापेषु च कालक्रमेण प्रकृष्टं पाटवमलभत। अथैकदा असंलान इति ख्यातन राज्यलुब्धेन सुरत्राणेन मिथिलाराज्यमायत्तीकर्तुम् उद्युक्तेन प्रारब्धे समरे मिथिलाधिपं महाराजगणेश्वरं निहत्य स्वमनोरथस्तेन सफलीकृतः। ततश्च पितृवध-सम्भवेन शोकेन अभिभूतोऽपि वैरनिर्यातनं सुनिश्चितं कर्त्तुमीहमानः दुर्बलः प्रबलं शत्रुकण्टकमुद्दिधीषुर्बलवत्तरं समाश्रयेदिति नीतिमनुसृत्य तदीयस्तनयः सानुजः कीर्त्तिसिंहो जौनपुराधीशस्य इब्राहिमशाह इत्याख्यस्य सुरत्राणस्य साह्यमासाद्य रणाङ्गणे तमरातिमसंलाननामधेयं पराजेष्ट। कीर्त्तिसिंहस्य शौर्य-प्रकर्षमालोक्य नितरां प्रीतमनाः जौनपुराधीशः सुरत्राणो मिथिला-राज्यसिंहासने सामन्तनृपतिरूपेण कीर्त्तिसिंहस्य राज्याभिषेकमहोत्सवं सोत्साहं निरवर्त्तयत्। शुभावसरेऽस्मिन् सकलैर्मैथिलप्रजाजनैरभिन-न्दितः कीर्त्तिसिंहश्चिरप्रतीक्षणसमासादितं - मिथिलाराज्यसिंहासन-मलञ्चकार। अवहट्टभाषायामपभ्रंशनेपथ्यं दधानायां निबद्धे संस्कृत-श्लोकसम्पुटिते कीर्त्तिलताख्ये परिस्फुरत्प्रतिभोल्लेखभव्ये काव्यबन्धे महाकविर्विद्यापतिरमुष्य महीपतेः शौर्यप्रोल्लासिनीं कीर्त्तिवल्लरीं शाश्वत-सौरभोद्गार - परिमांसलैर्वाङ्मयैर्मनोहरैः कुसुमस्तबकैः सम्भृतां विधाय दिगन्तरेषु विस्तारयामास। कवित्वद्युतिविभास्वरं स्वकीयभाषा-सौष्ठवं प्रति महाकवेरास्थाबन्धः परां काष्ठामधिरूढ-स्तदीयेऽधोविन्यस्ते पद्ययुग्मे शक्यं सुस्पष्टं विलोकयितुम्—

बालचन्द विज्जावइ भासा।
दुहु नहि लग्गइ दुज्जन हासा॥
ओ परमेसर हर सिर सोहइ।
ई णिच्चय णाअर मण मोहइ॥

अस्य संस्कृत-च्छाया यथा—

विद्यापति-कविभाषा न परामृश्या कुचेतसां हासैः।
चन्द्रकला किं शक्या जनेन केनापि दूषयितुम् ॥
सा परमेश्वरशिरसि द्युतिमादधती विराजतेऽतितराम्।
इयमपि नूनमनूनं सहृदयहृदयं वशीकुरुते ॥

अपभ्रंशभाषानिबद्ध - काव्योत्साहसम्भृते काले वीरश्रृङ्गार-रसोच्छला या काव्यपरिपाटी तदानीं प्रसारमुपेयुषी व्यजृम्भत तामेवानुसरन्तीयं महाकवेः काव्यसृष्टिः प्राचीनसाहित्यजगति लोकोत्तरवर्णनानैपुण्येन प्रशंसनीयं स्थानमर्हति। कीर्त्तिलतायां स्थाने स्थाने विन्यस्तेषु संस्कृतश्लोकेषु सचेतसां विनोदाय केचन श्लोकास्ततः समुद्धृत्य अत्र समुपस्थाप्यन्ते। तत्र प्रारम्भे भारती-स्तुतिमधिकृत्य सन्दब्धः श्लोको यथा—

द्वाः सर्वार्थसमागमस्य रसनारङ्कस्थलीनर्त्तकी
तत्त्वालोकनकज्जलध्वजशिखा वैदग्ध्यविश्रामभूः।
श्रृङ्गारादिरसप्रसादलहरी स्वर्लोककल्लोलिनी
कल्पान्तस्थिरकीर्त्तिसम्भ्रमसखी सा भारती पातु वः ॥

काव्यस्यास्य प्रथमः पल्लवः महाराजकीर्त्तिसिंहस्य विशदयशो-वैभववर्णनमधिकृत्य गुम्फितेन श्लोकेन समं महाकविना समुपसंहृतो यथा—

ईशमस्तकविलासपेशला
भूतिभार - रमणीय - भूषणा।
कीर्त्तिसिंहनृप-कीर्त्तिकामिनी
यामिनीश्वरकला जिगीषतु ॥

अस्य काव्यस्य समापनप्रसङ्गे महाराजस्य कीर्त्तिसिंहस्य शौर्यसमर्जितां कीर्त्तिं स्वकीयां दिग्व्यापिनीं सुललितां भारती-ञ्चाधिकृत्य महाकविना विरचितोऽधस्तनः श्लोकः समुपलभ्यते यत्र तयोश्चिरस्थितिकत्वाशंसा महाकविप्रार्थिता प्राकाश्यमुपयाति। यथा—

एवं सङ्गरसाहसप्रमथनप्रालब्धलब्धोदयां
पुष्णाति श्रियमाशशाङ्कतरणिं श्रीकीर्त्तिसिंहो नृपः।
माधुर्यप्रसवस्थली गुरुयशोविस्तारशिक्षासखी
यावद्विश्वमिदञ्च खेलतु कवेर्विद्यापतेर्भारती ॥

तुलुष्काक्रमणविसंष्ठुले तदानीन्तने काले मध्येसमाजं पौरुषावलम्बनस्य नितरामावश्यकत्वं मन्वानेन महाकविना काव्येऽस्मिन्नकुण्ठेन कण्ठेन समुद्गीता पौरुषप्रशस्तिरद्यापि सार्थक्यं बिभर्त्ति। यथा—

पुरिसत्तणेण पुरिसओ न हि पुरिसओ जम्ममत्तेन।
जलदानेन हु जलदो न हि जलदो पुञ्जिओ धूमो ॥

अस्य पद्यस्य भावानुरञ्जनं दधाना संस्कृतच्छाया यथा—

न हि जनुषैव हि कश्चित्पुरुषव्यपदेशभाजनं भवति।
पौरुषकृत्यमहिम्ना पुरुषः खलु कथ्यते पुरुषः ॥
जलदानेन हि जलदो लोके जलदाख्यया प्रथां लभते।
जलमददानो जलदो धूमस्तोमो न जलदोऽसौ ॥

अमुमेवार्थं पुराणप्रथित-महापुरुष-दृष्टान्त-साचिव्येन व्यावर्णयन् महाकविर्महाराजस्य कीर्त्तिसिंहस्य पौरुषप्रकर्षं समुपश्लोकयति। यथा—

पुरुष हुअउँ बलिराए जासु कर कन्ह पसारिअ।
पुरुष हुअउँ रघुतनय जेन्ने बले रावण मारिअ ॥१॥
पुरुष भगीरथ हुअउं जेन्ने णिउ कुल उद्धरिउँ।
परसुराम अरु पुरिस जेन्ने खत्तिअ खअ करिअउँ ॥२॥
अरु पुरिस पसंसञो रायगुरु कित्तिसिंह गअणेस सुअ।
जे सत्तु समर सम्मद्दि करु बप्प वैर उद्धरिअ धुअ ॥३॥

अस्य अवहट्टभाषामयस्य पद्यसन्दर्भस्य भाव-सम्पत्कान्तिविद्योतिनी संस्कृतच्छाया यथा—

पुरुषोऽभूद् बलिनृपतिर्यस्य पुरस्तात् स्वयं महाविष्णुः।
वामनवेषं धृत्वा याचकभावं समापेदे ॥१॥
पुरुषो जगति सुविदितो रामो रघुवंशसम्भवो जज्ञे।
येनासीदतिबलिना लङ्केशो रावणो निहतः ॥२॥

प्रथितोऽभूदथ पुरुषो भगीरथो येन भूभृता तपसा।
भुवि गङ्गामवतार्य स्वपूर्वजास्तारिताः सर्वे ॥३॥
परशुराम इति नाम्ना ख्यातश्चान्योऽपि पूरुषो जज्ञे।
यो निजघान समस्तं क्षत्रियवर्गं मदोन्मत्तम् ॥४॥
अधुना जयति गणेश्वर-नृपतिसुतः कीर्त्तिसिंह इति विदितः।
हत्वा येनारातीन् समुद्धृतं पैत्रिकं वैरम् ॥५॥

अतः परं सौवर्णकलसोद्भासि-प्रोत्तुङ्गहर्म्यमालासमलङ्कृतस्य जौनपुर-नगरस्य, क्रयविक्रयव्यवहारप्रसक्त-तत्रत्यजनाकीर्ण-विपणि-श्रेणीप्रसारित-विविधपण्यसम्भारवैभवस्य, धृष्टतुलुष्काधिकारिजन-प्रदर्श्यमानदुर्विनयस्य, दुर्गतिग्रस्तस्य विप्रसमाजस्य, राजकीयैश्वर्य-प्रतापस्य, सुरत्राणसन्दर्शन-सौभाग्यावाप्तिकामनया सुदीर्घ-प्रतीक्षा-कदर्थितस्य देशान्तरागत - सामन्तनृपतिसङ्घातस्य, कामोपचार-कुशलस्य वारवधूटीवृन्दस्य, सैन्यप्रयाणस्य, समरकोलाहलस्य, खड्गखणत्कारस्य, रणसम्मर्दस्य विजयोल्लासस्य च वर्णनानि समुपलभ्यन्ते। सेयमत्रत्या विच्छित्तिमयी वर्णनापरिपाटी प्रतिभोद्दीप्त-कविकर्ममहिम्ना ऐन्द्रजालिकपिच्छिकास्पर्शमवाप्य पाषाणभित्तिगात्रस्थेव प्राणस्पन्दन-समुच्छ्ला मूर्त्तिपरम्परा वर्ण्यमान-मशेषं वस्तु सचेतसां पुरतः सचमत्कारं प्रत्यक्षायमाणतामुपनयन्ती विभासते।

स्वधर्मोन्मादवशात् सनातनधर्ममूलकभारतीयाचार - परम्परा-विध्वंसन-गृहीतव्रतानां तुलुष्काधिकारिणां समुत्पीडनरभसेन विरुग्णां मिथिलायास्तदानीन्तनकालावधिव्यापिनीं परिस्थितिमत्र काव्यबन्धे वीरचरितप्रधानं शृङ्गाररसानुवेध-मनोहरं वाचिकं नेपथ्यमाश्रित्य व्यावर्णयता महाकविना विद्यापतिना पुरावृत्त-मूलकस्य प्रबन्ध-विरचनस्य कामपि विलक्षणां दिशमुन्मील्य पुरावृत्तार्पितघटनाचक्रं विविदिषूणां विदुषां कृते नितरामनर्घ्यमुपायनमत्रोपहारीकृतं विलसतीति पुराविदां वीतसंशीतिलेशा मतस्थितिर्जागर्त्ति।

अथ कालक्रमेण मिथिलाधीश्वरे कीर्त्तिसिंहे दिवं याते तस्य निरपत्यतया कामेश्वरठक्कुरस्य कनिष्ठस्तनयो भवसिंहदेवो राज्य-

धरमुवाह। प्रजाजनमनःकुमुदकलाधरस्य, समरशमित-दुर्मदप्रत्यर्थि-सार्थस्य, निरन्तर - जाज्वल्यमानवैतानवह्नि - विभास्वरीकृत-दिङ्मण्डलस्य, गोभूमिस्वर्णदान-सम्प्रीणित-सद्विप्रवर्गस्य तस्य किल राज्ञः सौराज्ये मिथिलामही चिरं मोदमानशे। महाकविना विद्यापतिना शैवसर्वस्वसारसमाख्ये स्वनिबन्धे गुम्फिता नृपतेरस्य प्रशस्तिरेतदीयां प्रतापसम्पदमित्थम् विशदयति –

गङ्गोत्तुङ्ग - तरङ्गितामललसत्कीर्त्तिच्छटा-क्षालित—
क्षोणीवर्त्ति - समस्तभूपतिवरो वीरव्रतालङ्कृतः।
भूपालावलि - मौलिमण्डलमणि-प्रत्यर्चिताङ्घ्रिद्वया-
म्भोजः श्रीभवसिंहभूपतिरभूत् सर्वार्थिकल्पद्रुमः॥

मिथिलाधिपतेर्भवसिंहात्परं तस्य ज्येष्ठस्तनयो देवसिंहो मिथिला-राज्यसिंहासनमध्यतिष्ठत्। नृपतेरस्य समरचर्या-वैशारदी श्रौतस्मा-र्त्तकर्मानुष्ठाननिष्ठा सौजन्यौदार्यादिगुण-सम्पत्तिश्च मिथिलायां परां विश्रुतिमञ्चन्ति। मिथिलामहीपतिममुमधिकृत्य शैवसर्वस्वसार—समाख्ये स्वविरचिते निबन्धे महाकविना विद्यापतिना विरचितम-मधस्तनं श्लोकद्वयं नृपतेरस्य गुणग्रामं पल्लवयति। यथा—

दृप्यद्दुर्वार-वैरिद्विपकुल-दलनाकुण्ठकण्ठीरवश्री-
रासीमाशेषभूभृन्मणिमुकुटतटज्योतिरुद्द्योतितांघ्रिः।
तत्सूनुः पुण्यकीर्त्तिर्नयावनयदयादानदाक्षिण्यदक्षो
वृक्षः सर्वाश्रितानां मिथिलभुवि नृपो देवसिंहो बभूव॥
दत्तं येन द्विजेभ्यो द्विरदमथ महादानमन्यैरशक्यं
का वार्त्ता त्वन्यदाने कनकमयतुलापूरुषो येन दत्तः।
यस्य क्रीडातडागस्तुलयति सततं शासने वारिराशिं
देवोऽसौ देवसिंहः क्षितिपतितिलकः कस्य न स्यान्नमस्यः॥

एकदा नैमिषारण्यमधिवसतोऽस्य महीपतेर्निदेशमनुरुध्य महा-कविना भूपरिक्रमणाख्यो ग्रन्थः संस्कृतां वाचमालम्ब्य व्यरचि यत्र ऋषिप्रवरस्य सूतस्य वधं विधाय नितरामनुतप्तेन बलरामेन ब्रह्म-हत्योद्भूतपातकपङ्कप्रक्षालनाय महर्षेर्धौम्यस्योपदेशमनुसृत्य नैमिषा-रण्यक्षेत्रादारभ्य जनकपुरपर्यन्तमङ्गीकृतायास्तीर्थयात्राया वर्णनं

विदधता महाकविना प्रसङ्गोचिताभिरुपदेशकथाभिः शबलितं तदन्तःपातिनां विविधानां तीर्थस्थलानां माहात्म्यं सङ्कीर्तितम्। तथा चोक्तम्

नत्वा गणपतिं साम्बं श्रीविष्णुं रविमम्बिकाम्।
भूपरिक्रमणग्रन्थो लिख्यते भुवि नैमिषे॥
पुराणानि च तन्त्राणि काव्यानि स्वमनीषया।
विलोक्य राजवृत्तानि नवरत्नकृतानि च॥
देवसिंहस्य रुचये कविर्विद्यापतिर्महान्।
वक्तुमारब्धवान् नानाप्रस्थानालङ्कृताः कथाः॥

ग्रन्थेऽस्मिन् विरलसमासा संस्कृता वाणी सरलपदविन्यास-महिम्नानायासमेव बोधक्षमा प्रसादपरिवेशलं नेपथ्यसौष्ठवमादधती पाठकानां सम्मुखीना भवति। दुरवबोध-पदसङ्घटनायां बलादुन्नीतालङ्कृतिचमत्कृतिविनियोजनायाञ्च स्तोकमपि नात्र महाकवेराग्रहः प्रतिभाति। ग्रन्थस्य कथा पुराणच्छायानुहारिणीम् ऋजुमतीनामपि मनोहारिणीं प्रवाहमयीं शैलीमालम्ब्य प्रसङ्गप्राप्तभूभागवर्णनतत्परा निरन्तरमग्रेसरति। महाकविना संस्कृतभाषायां विरचितेषु ग्रन्थेष्वयं प्रथमो ग्रन्थस्तस्य भौगोलिकं प्रज्ञानं पुराणेतिहासाख्यायिकापरिज्ञानेन सममेव प्रख्यापयति।

अथ मिथिलाधिपतेर्देवसिंहस्य द्वौ तनयौ बभूवतुः शिवसिंह-पद्मसिंह-नामानौ। तत्र शिवसिंहो ज्यायान्, पद्मसिंहश्च कनीयान् आसीत्। अथ यथाकालमुपनतं जराजनितशरीरशैथिल्यप्रभव-मसामर्थ्यम् वयस्कृतं भोगनिःस्पृहत्वञ्च सममेवानुभवन् महाराजो देवसिंहः ज्यायांसं तनयं शिवसिंहं मिथिला-प्रशासनभारनिर्वहणार्थं राजसिंहासनेऽभ्यषेचयत्। एतच्च तेन महीपतिना महाकविविद्यापति-पूर्वजप्रवरस्य चण्डेश्वर-महामात्यस्य राजनीतिरत्नाकरोक्तं राजकृत-राज्यदानप्रकरणस्थं वचनमनुसृत्य समनुष्ठितम्। तथा चोक्तम्—

"यदा राजा जरायुक्तो रोगार्त्तो निःस्पृहोऽपि च।
आसन्नमृत्युं विज्ञाय कुलधर्मं विचारयन्॥
तदा पौरजनान् सर्वानाहूय विधिवच्च तैः।
पुत्रमेव संस्थाप्य पुरे ज्येष्ठं नृपासने॥

माङ्गल्यंतिलकं तस्य भाले विन्यस्य पर्षदि ।
सप्ताङ्गानि च राज्यानि ज्येष्ठपुत्राय दापयेत् ।।
अद्यारभ्य न मे राज्यंराजायं रक्षतु प्रजाः ।
इति सर्वम्प्रजाविष्णुसाक्षिणं श्रावयेन्मुहुः ।।"

ततश्च तातपादे जीवत्येव शिवसिंहो मिथिलाधीश्वरस्य गौरवपूर्णं पदमध्यासीनो राज्यप्रशासनं प्रारेभे । महीपतिरयं सौजन्यजन्ययशः-सम्पदा, पराक्रम - प्रकर्षेण, - स्वदेशप्रतिष्ठापरिपालनप्रवणतया, इ'टापूर्त्तकृत्यानुष्ठानव्यसनितया विद्वद्वृन्द-संरक्षणपरायणतया, नृत्यसङ्गीतकाव्यगोष्ठीविदग्धतया च मिथिलामधिवसतामशेषाणां पौरजानपदानां जनानां मनांसि सम्पूर्णमण्डलः शारदश्चन्द्र इव ज्योत्स्ना-प्रवाहभरेण प्रह्लादयन् व्यराजत । बाल्यकालादेवास्य महीपतेर्महाकविना विद्यापतिना समं प्रायो वयोसाम्यसमुद्भवं सख्यं कालेन तथा बद्धमूलमभवद् यथासौ महाकविरमुना महीपतिना न चिरेण कालेन विस्रम्भस्य, बहुमानस्य, प्रीतिप्रकर्षस्य च परां काष्ठां समारोपितः ।

एकदा तातपादेषु जीवत्स्वेव श्रौत-स्मार्त्त-परम्परा-प्रतिष्ठित-सनातन-धर्म-प्रत्यर्थिभूतस्य तुलुष्कशासनश्रेष्ठस्य दिल्लीपुरीमधिवसतः सुरत्राणस्य वशंवदतामसहमानः स्वदेशाभिमानसमाध्मातमानसोऽसौ मिथिलेश्वरः शिवसिंह-स्तत्सविधे वार्षिक-करद्रव्य-सम्प्रेषणाद्विरतो बभूव । अचिरेणैव कालेन शलभगणैरिवागणितैः प्रबलबलैस्तुलुष्कैराक्रान्ता मिथिला । सम्प्रवृत्तमायोधनम् । ततः संख्यागरिष्ठैस्तुलुष्क-सैन्यैर्बन्दीकृतो महाराजः शिवसिंहो दिल्लीपुरीं नीतस्तत्र च सुर-त्राणस्याज्ञया कारागारे निःक्षिप्तः । पुत्रस्य कारावासव्यथामनुध्यायतो वर्षीयसो देवसिंहस्य चेतसि दिवानिशं व्यजृम्भत दुस्सहा दाहव्यथा ।

एवंविधे व्यतिकरे महाकविर्विद्यापतिः दिल्लीपुरीं गत्वा सुर-त्राणस्य पुरतः "कविरस्मि । सिद्धा मम क्रान्तदर्शिता" इति विनिवेद्य तस्मै स्वपरिचयं प्रादात् । ततः कौतुकाकुलितेन चेतसा तद्वचनस्य याथातथ्यं परीक्षितुमनाः सुरत्राणो महाकविं समादिदेश सद्यः स्नातायाः सौन्दर्यं वर्णयितुम् । ततो महाकविर्वर्णयति मिथिलाभाषामाश्रित्य सद्यो विरचितेन गीतेनाधस्तनेन । यथा—

कामिनि करए सनाने ।
हेरितहि हृदय हनए पचबाने ॥ १ ॥
चिकुर गरए जलधारा ।
जनि मुखससि डर रोअए अँधारा ॥ २ ॥
कुच-युग चारु चकेवा ।
निअ कुल मिलिअ आनि कोन देवा ॥ ३ ॥
ते संका भुजपासे ।
वांधि धएल उड़ि जाएत अकासे ॥ ४ ॥
तितल वसन तन लागू ।
मुनिहुक मानस मनमथ जागू ॥ ५ ॥
भनइ विद्यापति गावे ।
गुनमति धनि पुनमत जन पाबे ॥ ६ ॥

गीतस्यास्य संस्कृतनेपथ्यमयं स्वरूपमधस्तात् समुपस्थाप्यते—

परिशीलयति स्नानं तरुणी कामेषुतापसन्तप्ता ।
प्रहरति कामो बाणैर्मनांसि तां पश्यतां गाढम् ॥१॥
विगलति वारिप्रसरश्चिकुरेभ्यो मदिरनयनायाः ।
मुखचन्द्रच्छविभीतो रोदिति मन्ये तमोभारः ॥२॥
पीनघनस्तनयुगलं कोकद्वन्द्वं मनोहरं नितराम् ।
कः खलु देवो येन स्वकुले निहितं सहैव तद्द्वन्द्वम् ॥३॥
कोकयुगं मा यातु व्योमतलं खल्वितः समुड्डीय ।
इत्थं शङ्कितचित्ता कृतहस्तस्वस्तिका तन्वी ॥४॥
सद्यः-स्नाता तरुणी दधती वसनं शरीरसंसक्तम् ।
कामं जनयति कामं मनसि मुनीनामपि प्रसभम् ॥५॥
विद्यापतिः कवीशः कथयति पुण्येन लभ्यते महता ।
गुणवद्भिरीदृशी खलु गुणगणरुचिराङ्गना नियतम् ॥६॥

परन्त्वेतावना परितोषमलभमानः सुरत्राणो महाकविममुं दारुनिर्मितायां बृहन्मञ्जूषायां पिधाय ताञ्च रज्जुसाहाय्येन कूपगर्भेऽवतार्य कूपसविधे विद्यमानायां वेदिकायां सुरूपामेकां वधूटीं मुखानिलेनानलसमिन्धन-परायणां संस्थाप्य महाकविमुपरितनं दृश्यं वर्णयितुमादिदेश । ततश्च महाकविर्वर्णयति—

"सजनि निहुरि फुकु आगि।
तोहर कमल भमर मोर देखल मदन उठल जागि ॥
जौं तोहे भामिनि भवन जएबह
अएबह कौने बेला।
जौं एहि सङ्कट सों जिव बाँचत
होएत लोचन मेला ॥"

संस्कृतभाषायां कृतनेपथ्यविन्यासं मैथिलीभाषामयम् उपरितनं गीतमित्थं शक्यते समास्वादयितुम्—

सुन्दरि ! नतशिरसा त्वं
ज्वालय वह्निं मुखानिलोच्छ्वासात्।
तव कमलं मधुमधुरं
दृष्टं मच्चित्त भृङ्गेन ॥
सौरभसम्भृतमनुपम—
रूपं कमलं त्वदीयमालोक्य।
सुप्तो मनसि मदीये
जागरितः साम्प्रतं मदनः ॥
त्वं यदि यास्यसि भवनं
भामिनि ! भूयः कदा त्वमागन्ता।
जाते सङ्कटमोक्षे
नूनं दृक्सङ्गमो भावी ॥

गीतमाकर्ण्य भावार्थं चास्यावधार्य नितरां चमत्कृतमनास्तुलुष्केश्वरः प्रसादसुमुखो भूत्वा महाकवेरभिलषितां शिवसिंहस्य कारागृहान्मुक्तिमादिदेश। ततश्च कृतकृत्यो महाकविः सप्रमोदं प्रमुदितचित्तेन प्राणप्रियेण वयस्येन शिवसिंहेन समं मिथिलां प्रतिनिवृत्तः। अद्य पुत्रस्य मुखं विलोक्य देवसिंहस्य हृदयं परिप्लावितं जातं प्रमोदवन्यया। मिथिलायां सर्वत्र प्रसारमाससाद प्रहर्ष-प्रवाहः। विद्यापतेश्च महाकवित्वं दिगन्त-विसृत्वरीं कीर्तिमुपलेभे !

कालक्रमेण मिथिलाधराधीश्वरः पुण्यश्लोको देवसिंहो दिवं ययौ। तदीयश्राद्धकर्मानुष्ठानसम्पादनस्य आयोजनमुद्दिश्य व्यापृतचित्ते महाराजे शिवसिंहे प्राच्यभारत-प्रज्वलितप्रतापो जौनपुरमधिष्ठितः

सुरत्राण: समुच्छलत्कल्लोलमालाकुलं पारावारमिवाप्रमेयबलं दुर्मद-तुलुष्क-सैन्य-सङ्घातं सज्जीकृत्य मिथिलामभ्यषेणत्। उद्दामराट-हृनिनादपरिमांसलेन समरतूर्य-निर्घोषेण समाध्मातमभवद् व्योम-मण्डलम्। वीरवरो महाराज: शिवसिंहश्चतुरङ्गिणीसेनासन्नाहपुरस्सरं शौर्यप्रज्वलितमूर्त्ति: समराङ्गणमवातरत्। प्रवृत्तं लोमहर्षणं युद्धम्। तुलुष्कसैनिकानामत्युग्रैराक्रमणै: प्रविशीर्णो मिथिलेश्वरस्य दुर्ग-प्राकार:। घोटीखुरपुटीसम्पात-समुद्धूतरजोराजिस्थगिते भानवीये प्रभाविसरे समुल्लसदसिलताश्यामलीकृते च रणाङ्गणाकाशे कातराणां हृदयोत्कम्पकारिणी खणत्कारमुखर-खड्गसद्धघट्टप्रभवा क्षणदृष्टनष्टा स्फुलिङ्ग विद्योतसन्तति: सघनघनघटाच्छन्ने नभोमण्डले परिस्फुरन्तीव विद्युदुद्योतपरम्परा प्रादुरभवत्। पदातिभि: सादिभिर्गजारूढै: स्यन्दनस्थैश्च रणोन्मादाविष्टै: परस्परं निष्ठुरप्रहारसंसक्तै: सैनिकैर्विश्वविनाश-गृहीतव्रतै: कृतान्तदूतैरिवारब्ध: प्रचण्ड: समर-ताण्डवाडम्बर:। पर:सहस्रै: क्षतविक्षतविग्रहै: कातराक्रन्दकारिभि: कैश्चिद्धृदयनिखातशरोद्धरणव्यग्रै: कैश्चिदुपनतप्राणोत्क्रान्तिकालतया व्याकुलं विचेष्टमानैरपरैरवाङ्मुखैरितरैरुत्तानविग्रहैर्गतासुभिर्विवृता-स्यै:पर्यस्तनेत्रै: क्षतजोक्षितकलेवरै: शस्त्राजीवै: समन्तात् समास्तृता समरमेदिनी कल्पान्तकालावतीर्णकालरात्रि-क्रीडा-भूमिरिव भीषणा समदृश्यत।

तदेवं परितो विजृम्भमाणे वीरवृन्दग्रास-घस्मरे समरे शौर्यरस-प्रकर्षैकहार्यहृदया विजयश्री: पर्यन्ते सिंहोपमपराक्रमस्य शिवसिंहस्य वशम्वदतामुपेत्य मिथिलामहीमण्डलाखण्डलस्यास्य वीररत्नस्य कर्पूरपरागपाण्डुरैर्यशश्चन्द्रिकालोकैर्दिगङ्गनावदनानि व्यभासयत्। इत्थं मातृभूमिसम्मानसंरक्षणदीक्षित: शिवसिंहो महाराज: प्रत्यर्थिसार्थं पराजित्य पितु: श्राद्धकृत्यं विधाय गो-भूमि-स्वर्ण-प्रचुराभिर्दक्षिणा-भिर्विप्रान् सन्तोष्य मिथिलाराज्यसिंहासनमध्यासीनो महाराजा-धिराजपदमधिचक्रे। प्रमोदभरसम्भृते चास्मिन् समये दिङ्मुखान्यापूरयन् परित: प्रससार स्वस्तिवाचनध्वनिसहित: पर:सहस्रजनोदीर्यमाणजयनिनामेदुर: शङ्खनादोपबृंहितो मङ्गल-तूर्यनाद:। परमानन्दसन्दोहमयेऽस्मिन् सौभाग्येनोपायनीकृतेऽवसरे महाराजाधिराजो मिथिलाधराधीश्वर:शिवसिंहो महाकवेर्विद्यापते-

वैदुष्यप्रकर्षं विलक्षणं कविकर्मकौशलं राजतन्त्रनैपुणं गुणग्रामाभिरामं चरित्रोत्कर्षञ्च ध्यायं ध्यायं नितरां प्रीतमनास्तस्मै बिसफीत्याख्यं ग्रामं समेषां पारिषद्यानां समक्षं शासनीकृत्य सबहुमानं समर्पयामास। एतच्च प्रकृत-ताम्रपत्रलेखप्रामाण्यादवसीयते। जिज्ञासूनां कौतूहलापनोदनाय ताम्रपत्रस्थोलेखोऽधस्तादुपन्यस्यते।

"स्वस्ति गजरथेत्यादि-समस्त प्रक्रिया-विराजमान-श्रीमद्रामेश्वरी-लब्धप्रसाद-भवानीभवभक्ति- भावनापरायण - रूपनारायण - महाराजधिराज - श्रीमच्छिवसिंहदेवपादाः समरविजयिनो जरैलतप्पायां बिसफी ग्रामवास्तव्य-सकललोकान् भूकर्षकांश्च समाज्ञापयन्ति। विदितमस्तु भवताम्। ग्रामोऽयमस्माभिः सप्रक्रियाभिनवजयदेव-महाराज-पण्डितठक्कुरश्रीविद्यापतिभ्यः शासनीकृत्य प्रदत्तोऽतो यूयमेतेषां वचनकरीभूय कर्षणादिकं कर्म करिष्यथ। ल० सं० २९३ श्रावण शुदि सप्तम्यां गुरौ।

श्लोकस्तु

अब्दे लक्ष्मणसेनभूपतिमिते वह्निग्रहद्व्यङ्किते
मासि श्रावणञ्ज्ञके मुनितिथौ पक्षे वलक्षे गुरौ॥
वाग्वत्याः सरितस्तटे गजरथेत्याख्याप्रसिद्धेपुरे
दित्सोत्साहविवृद्धबाहुपुलकः सभ्याय मध्येसभम्॥ १

प्रज्ञावान् प्रचुरोर्वरं पृथुतराभोगं नदीमातृकं
सारण्यं ससरोवरञ्च बिसपीनामानमासीमतः।
श्रीविद्यापतिशर्मणे सुकवये वाणीरसास्वादविद्
वीरः श्रीशिवसिंहदेवनृपतिर्ग्रामन्ददे शासनम्॥२॥

येन साहसमयेन शस्त्रिणा तुङ्गवाहवर-पृष्ठवर्त्तिना।
अश्वपत्तिबलयोर्बलं जितं गज्जनाधिपतिगौडभूभुजाम्॥३॥

रौप्यकुम्भ इव कज्जलरेखा
श्वेतपदम इव शैवलवल्लो।
यस्य कीर्त्तिचयकेतककान्त्या
म्लानिमेति विजितो हरिणाङ्कः॥४॥

द्विषन्नृपतिवाहिनीरुधिरवाहिनीकोटिभिः
प्रतापतरुवृद्धये समरमेदिनी प्लाविता ।
समस्तहरिदङ्गनाचिकुरपाशवासक्षमं
सितप्रसरपाण्डुरं जगति येन लब्धं यशः ॥५॥
मतङ्गजरथप्रदः कनकदानकल्पद्रुम—
स्तुलापुरुषमद्भुतं निजधनैः पिता दापितः ।
अखानि च महात्मना जगति येन भूमीभुजा
परापरपयोनिधि - प्रथममैत्रपात्रं सरः ॥६॥
नरपतिकुलमान्यः कर्णशिक्षावदान्यः
परिचितपरमार्थो दानतुष्टार्थिसार्थः ।
निजचरितपवित्रो देवसिंहस्य पुत्रः
स जयति शिवसिंहो वैरिनागेन्द्रसिंहः ॥७॥
ग्रामे गृह्णन्त्यमुष्मिन् किमपि नृपतयो हिन्दवो ये तुरुष्का
गोकोलश्वात्ममांसैः सहितमनुदिनं भुञ्जते ते स्वधर्मम् ।
ये चैतद् ग्रामरत्नं नृपकररहितं पालयन्ति प्रतापै—
स्तेषां सत्कीर्त्तिगाथा दिशि दिशि सुचिरं गीयतां वन्दिवृन्दैः ॥८॥

इत्थं राजप्रसादसमावाप्त-विपुलवैभव - सम्भारोऽसौ महाकविर्मिथिलेश्वरवर्यस्य शिवसिंहस्य राज्याधिरोहणानन्तरमुपनतामन्दानन्दसन्दोह - सम्भृतां राजकीययैश्वर्यविभास्वरीं काल-कलामवहट्ठभाषायां विरचिते कीर्त्तिपताकाख्ये काव्यबन्धे सुविशदं व्यावर्णयत् । काव्यमिदमद्यापि खण्डितमेवोपलभ्यते । यावानस्य भागः समुपलभ्यते तस्य पर्यालोचनेनेदं स्फुटीभवति यदस्य पूर्वार्द्धे शृङ्गाररसस्य स्रोतस्विनी निर्भरं वहति, उत्तरार्द्धे च वीररसस्य परमोद्दामः प्रवाहः समुच्छलति । काव्यसमापनप्रसङ्गे विन्यस्तायां पुष्पिकायामुपन्यस्तः संस्कृतश्लोकश्चेत्थम्—

"एवं श्रीशिवसिंहदेवनृपतेः सङ्ग्रामजातं यशो
गायन्ति प्रतिपत्तनं प्रतिदिशं प्रत्यङ्गणं सुभ्रुवः ।
एतत्कीर्त्तिपताकया विलसिता वाणी च विद्यापते—
राचन्द्रार्कमियं विराजतु गृहाम्भोजेषु नित्यं सताम् ॥"

महाकवेरस्य रचनासु सातिशयं प्रथितानि मिथिलाभाषामयानि माधुर्यनिधानभूतानि गीतानि अस्यैव महाराजस्य राज्यकाले

प्रादुर्भावमुपाययुः। निरतिशयविस्रम्भभाजनस्य विद्वत्प्रियस्य प्रियवयस्यस्य महाराजस्य शिवसिंहस्य सन्निधानमिव सन्निधानमासाद्य महाकविनामुना कमनीयानल्पनाकुशलायाः प्राक्तनसंस्कारमहिम्नानायासमेव परिस्फूर्त्तायाः काव्यप्रतिभायाः समुल्लासेन लालित्यमाधुर्यसौकुमार्यगुणैकायनीभूतया शृङ्गाररससम्पदा सम्भृतां प्रसादसुभगां मिथिलाभाषामयीम् पदावलीमालम्ब्य सुगुम्फितासु सङ्गीतशास्त्रानुगामिनीषु अष्टाशीत्यधिकैकशतमितासु गीतसन्ततिषु महाराज्ञ्याः लखिमादेव्याः महाराजशिवसिंहस्य प्रियतमारूपेण समुपलब्धं नामाङ्कनं विलोकय्य वङ्गजनपदप्रथितकीर्त्तिः वैष्णवभक्तशिरोमणिर्नरहरिदासः विद्यापतिर्लखिमादेवीं साक्षाद्राधास्वरुपां मन्यमानस्तस्याः समक्षं शृङ्गाररस-प्रस्रवणायमानानां गीतानां रचनासु परां स्फूर्त्तिमनुभवति स्मेति राधामाधवशाश्वतलीलानिमग्नमानसस्य भक्तप्रवरस्य यत्सदृशं तदनुरूपं स्वमतमाविश्चकार। तथा चोक्तम्—

लछिमा रुपिनि राधा इष्ट वस्तु जार।
जबे देखि कविता स्फुरय शत वार॥

वङ्गभाषोपनिबद्धस्य पद्यस्यास्या संस्कृतच्छाया यथा—

लखिमारूपमापन्नामिष्टदेवीं स राधिकाम्।
पश्यति स्म यदा तस्य काव्यश्रीः प्रास्फुरत्तदा॥

अत्रेदमपि विद्यापतिविरचितप्रसङ्गसमनुप्राप्त-गीतवश्रण-पराणां सचेतसां नाविदितं यन्महाराजस्य शिवसिंहस्य सुप्रथितं तद्विरुदवर्णनप्रसङ्गोदितमपरं नामधेयं "रूपनारायण" इत्यप्यासीत्। इत्थं राज्ञीं लखिमादेवीं राधास्वरूपां राजानञ्च शिवसिंहं नारायणस्वरूपं सतत्त्वावगाहिन्या दृशा पश्यतोऽस्य भक्तशिरोमणेस्तपः-प्रमुष्टसांसारिक-वासनाधिवासनस्य महाकवेः सुप्रथितानि शृङ्गारगीतानि वस्तुतो वेद्यान्तरस्पर्शशून्यानि राधामाधवशाश्वतलीलागीतान्येव सन्ति, न पुनश्चर्मंमयनयनोपनीत-जागतिक-प्रपञ्चसम्भृत-दृश्यसाक्षात्कारमात्रकृतःर्थम्मन्यैः प्रत्यहं परिचयपदवीमुपनीयमानानां प्राकृतस्त्रीपुंसजनाभ्यस्तचराणां स्थूलस्थूलानामिन्द्रियदुर्विलसितानां वर्णनामात्रविश्रान्तानि तानीति सम्प्रदायविदः समामनन्ति।

एतदुक्तं भवति—सकलेऽस्मिन् विरञ्चिप्रपञ्चे परिदृश्यमानो भावव्यूहः सुखदुःख-मोह-त्रितयपरामृष्ट एव प्रतीतिमारोहति इति कुतस्तेषां यथादृष्टवर्णनायामलौकिक - रससम्विदुन्मेषकौशलावसरं कविरुपलभेत ? वस्तुतस्तु शृङ्गाररसाभिव्यञ्जनौपयिक-विभावानुभावव्यभिचारिणां दृश्यकाव्ये चतुर्विधाभिनयसहकारेण प्रत्यक्षकल्पतामुपनीयमानानां, श्रव्यकाव्ये च गुणालङ्कारविन्यासंसमलङ्कृत-ललितवागर्थ-निबन्धनमहिम्नाभिव्यज्यमानानां तेषां साक्षात्कारेण सहृदयानां मनोमुकुरे झगिति समुद्भासमाना मसृण-कान्तिविसर-विभास्वरे वरवर्णिनीवपुषि विभाव्यमाना लावण्यप्रभेव परिस्पन्द-शालिनो नितरां विलक्षणा चमत्कारैकसारा साक्षिभास्यप्रत्ययकक्षाधिरुढा वीतविघ्ना प्रतीतिरेव शृङ्गार-रसव्यपदेशं लभते। नेयं सुदुर्लभाध्यात्मिकी प्रतीतिः स्त्रीव्यसनिभिः शक्यते गोचरीकर्त्तुमिति ये विद्यापतेर्गीतिषु व्यज्यमानं शृङ्गारं विकृतकामवासनावर्णनव्यापारान्नातिरिक्ततया निर्धारयन्ति ते विप्रतिषिद्धवचनाः कथं श्रद्धेयवचनाः स्युरिति नैव जानीमः। यद्यसौ शृङ्गारस्तर्हि नासौ लौकिकीं चमत्कारविधुरां प्रतीतिमवगाहेत। यद्यसौ तादृशीं लौकिकीं प्रतीतिमवगाहते तर्हि नासौ शृङ्गारव्यपदेशं लब्धुमर्हति। शृङ्गारश्च लौकिक-प्रतीतिविषयश्चेति विप्रतिषिद्धं वचनम्। रसराजः शृङ्गारस्तु श्रीविष्णुदैवत इति सुस्पष्टं तद्विदाम्। प्रसङ्गेऽस्मिन् निगमागमाभ्यासविचक्षणा ह्येवं सङ्कीर्त्तयन्ति—

आभिरूप्यमधिष्ठानं शृङ्गारस्य यतो भवेत्।
अभिरूपोत्तमो विष्णुस्तस्मादस्याधिदैवतम्॥
आत्मा तु राधिका तस्य तयैव रमणादसौ।
आत्माराम इति प्रोक्तः सतत्त्वज्ञैर्महर्षिभिः॥
राधा साक्षान्महालक्ष्मीः कृष्णो नारायणः प्रभुः।
नैतयोर्विद्यते भेदश्चन्द्रचन्द्रिकयोरिव॥
इत्थं दिव्यस्वस्वरूपाभ्यां विना ताभ्यां न किञ्चन।
चिदचिल्लक्षणं सर्वं राधाकृष्णमयं जगत्॥

तस्माद्दिव्यभावोद्भावनभव्येषु भक्तप्रवरेण महाकविविद्यापतिना साक्षात् परम्परया वा समुद्गीतेषु शृङ्गारोज्ज्वल-राधामाधव-लीलाविभूतिवर्णन-विभूषितेषु गीतेषु अलमन्यथा चिन्तयित्वेति

नास्तिकव्रतमश्छन्नो दुरामोदमेदुरपङ्कमङ्कुलो विटवृत्तनिष्णातैरनुसृतो भक्तवृन्दविगर्हितो भ्रान्तिसम्भृतः पन्थाः सर्वथा परिहरणीयतामर्हतीत्येवात्र सतत्त्वविदां सनां सद्भिः सादरमुरीकृता मतस्थितिश्चिराय विराजते ।

मिथिलामहीमहेन्द्रस्य शिवसिंहस्य सान्निध्ये विद्यापतिना विरचितानि गीतानि महाराजस्यान्तः पुरेऽर्घमहिलासमार्जं वैदुष्यस्य काव्यकौशलस्य तौर्यत्रिकवैशारद्यस्य परां कोटिमधिशयानया सकलकलाकलापनिष्णातया महाराज्ञ्या लखिमादेव्या समं सिंहासनमध्यासीनस्य परमरसिकस्वभावस्य मिथिलाधीश्वरस्य समक्षं गानविद्याविचक्षणाभिः नृत्यकलानिष्णाताभिस्तरुणीभिः साभिनयं गीयमानानि वीणावेणुमृङ्गकांस्यतालध्वनिसमनुगतं-कङ्कणकाञ्चीनूपुरसिञ्जितसमन्वयमवाप्य लोकोत्तरमाधुर्यमयीं स्वरलहरीपरम्परामातन्वानानि प्रमोदभरपुलकितान्तः करणानन्तःपुरपारिषद्यान् कामपि वीतद्वैतामानन्दैकघनां मनोभूमिमुपनयन्ति स्म । यत् सत्यमेतदीयेषु गीतेषु साक्षाद् भगवती सरस्वती मिथिलाभाषामयं सरसमधुरं नेपथ्यमालम्ब्य समवतीर्णा विराजते यस्या विपञ्चीस्वरसौभाग्यसमवेतं दिव्यनूपुरसिञ्जितमत्र प्रतिगीतमनारतं ध्वन्यमानमनुभूयते । गीतगोविन्दसमाख्यं ललितमधुर-पदसन्दर्भमनोहरं दिव्यशृङ्गाररसमुज्ज्वलं काव्यरत्नं निर्माय दिगन्तविसृत्वरेण यशःपूरेण भुवनाभोगमुद्भासितवतः श्रीजयदेवकवेः भावसम्पत्समृद्धा काव्यशैली विद्यापतेरादर्शतामुपागात् । ततश्चायम् "अभिनवजयदेव" इत्युपाधिना प्रथितो बभूव । महीभृतः शिवसिंहस्य निदेशमनुपालयन् कायस्थकुलोद्भवो जयतसमाख्यः संगीतलयाभिज्ञोऽस्य महाकवेर्गीतानि तत्सविधे विविधरागोचितस्वरसंयोजनद्वारेण गेयगुणप्रोज्ज्वलानि व्यधात् । तदिदं रागतरङ्गिणीसमाख्यं सङ्गीतशास्त्रग्रन्थं निर्मितवता लोचनकविना तत्रैवोक्तम् । यथा -

सुमतिसुतोदयजन्मा जयतः शिवसिंहदेवेन ।
पण्डितवरकविशेखरविद्यापतये तु सत्यरसः ॥

अथैकदा महाकविना विद्यापतिना मिथिलेशस्यास्य निदेशमनुसृत्य गद्यपद्यमयं पुरुषस्वभाववैविध्यपरीक्षणनिकषोपलप्रख्यं पुरुषपरीक्षासमाख्यं सरलसंस्कृतभाषानिबद्धं ग्रन्थरत्नं निर्माय संस्कृत-कथा-काव्यस्य कापि विलक्षणैव विन्यासविच्छित्तिः समुन्मीलिता। तथा चोक्तम्—

"शिशूनां सिद्ध्यर्थं नयपरिचितेर्नूतनधियां
मुदे पौरस्त्रीणां मनसिजकलाकौतुकजुषाम्।
निदेशान्निःशङ्कं सपदि शिवसिंहस्य नृपतेः
कथानां प्रस्तावं विरचयति विद्यापतिकविः॥"

कृतयुगोत्पन्नानां महासत्त्वानां पुरुषरत्नानां चरित्रोत्कर्षस्य कथा साम्प्रतिकानां जनानां पुरतो दृष्टान्तरुपेण नोपस्थापनीयतामर्हति, यतः खलु कालविप्रकर्षादिदानीन्तनेषु तादृशस्य सत्त्वोत्कर्षस्य, बुद्धिवैभवस्य, तेजोबलस्य च मनागपि स्पर्शो न सम्भाव्यते। तस्मादत्र कलियुगसम्भूतानामेव महापुरुषाणां चरित्रोत्कर्षो लोकशिक्षार्थं कथाव्याजेन महाकविना समुन्मीलितो विलसति। तदुक्तम्—

कलौ शिक्षाहेतुर्न खलु कृतजातस्य चरितं
क्रियायां दृष्टान्तः समयकृतभेदो न घटते।
न सा बुद्धिः पुंसां न च वपुषि तेजस्तदधुना
न वा सत्य तादृक् कलिसमयसञ्जातजनुषाम्॥

पुरुषपरीक्षायाः कथाप्रबन्धस्य प्रारम्भश्चेत्थं भवति। आसीत् चन्द्रातपाभिधानायां नगर्यां पारावारो नाम सुप्रथितपराक्रमो महीपतिः। तस्यैका तनूजा सर्वगुणसम्पन्ना पद्मावती नाम बभूव। अथैकदा तां समतिक्रान्तशैशवे वयसि वर्त्तमानां विलोक्य कुलेन, रूपेण, गुणेन च तस्यास्तुल्यं वरमन्वेष्टुं सचिन्तो महीपतिः सुबुद्धिनाम्ना प्रथितं मुनिमभ्येत्य तस्मै स्वचिन्ताविषयं समाचख्यौ। ततश्च राजन्! पुरुष वरं कुर्विति तेनोक्तो महीपतिः वरत्वस्य पुरुषत्वव्याप्यतया पुरुषेण सह वरस्याविनाभावात् तदुक्तेस्तात्पर्यमनवधारयन् पुनस्तं पप्रच्छ—कथमपुरुषोऽपि वरः सम्भाव्यत इति। ततो मुनिना इत्थं स्वतात्पर्यं विवृतं यद् त्रिलोकेऽस्मिन् भूवलये

प्रभूताः सन्ति पुरुषा ये केवलमाकारमात्रेण पुरुषाः कथ्यन्ते, परन्तु तेषु नैव काचित् पुरुषोचिता गुणकणिकापि दृष्टिमायाति। तस्मादीदृशान् वर्जयित्वा पुरुषोचितैः शौर्य-सद्बुद्धिविद्यादिभिः गुणगणैः पुरुषार्थसाधनक्षमं पुरुषं स्वतनूजाया वरं विधेहीत्यभिहितोऽसि। तदुक्तम्—

"लभ्यन्ते पुरुषाकाराः पुरुषः खलु दुर्लभः।
वक्ष्यमाणेन चिह्नेन निखिलेनोपलक्षितः॥
वीरः सुधीः सविद्यश्च पुरुषः पुरुषार्थवान्।
तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः॥"

अतः परम् उदारण-प्रत्युदाहरणाभ्यां पुरुषैरुपादेयानां गुणानां पात्रभूता उत्तमकोटिकाः पुरुषाः, हेयानाञ्चावगुणानां पात्रभूता अधमकोटिकाश्च पुरुषाभासाः काव्येऽस्मिन् चतुश्चत्वारिंशन्मिताभिः कथाभिः सम्वर्णिताः सन्ति। वीरचरित्रस्य समुपश्लोकनं कातरस्य पुरुषाभासस्य अवगीतचरित्रवर्णनं विना न शक्यं साधु विधातुमिति मनसि निधाय महाकविना अत्र ग्रन्थे प्रत्युदारणकथाः सन्ति सुगुम्फिताः। किञ्च "निषेध्यबोधाद्धि निषेधबोध" इत्यभियुक्तोक्तिनिहितं तथ्यम्प्रति सातिशयं जागरूकोऽस्माकं महाकविः हेयानामवगुणानां प्रहाणार्थं तत्परिज्ञानं नितरामावश्यकमिति मन्वानस्तत्स्फो-रणायापि समुपादेय-गुणगणोर्जित-चरित्रावदातकथानामनुषङ्गभूतम् प्रत्युदाहरणकथाप्रबन्धं न्यभान्त्सीत्। एतदुक्तं भवति यथा श्यामलदेहयष्टि-समवेत-रूपलावण्यप्रभाविसरसम्प्रमुष्ट-नीलोत्पलदलद्युतिकायाः कामिन्याः कपोलफलके परिमलमांसलविशन्दश्रीखण्डचन्दनद्रवमयी पत्रभङ्ग-रचना परभागलाभात् कामपि विलक्षणां सहृदयैकसंवेद्यां कान्तिसम्पद समुन्मीलयति तथैवात्र अवगुणकालिमकलङ्कितचरित्र-वर्णनसाचिव्येन विधीयमानं गुणोज्ज्वलस्य महापुरुषस्य चरित्रवर्णनं परभागलाभाद् वैशद्यस्य परांकोटिमधिरूढं सदस्माकं महाकवेः कथाभिधानकला-कौशलस्य नूनमनपह्नवनीयं प्रकर्षवैलक्षण्यं प्रमाणयति।

परिच्छेदचतुष्टयात्मना प्रविभक्तेऽस्मिन् ग्रन्थे गुम्फितानां कथानां नामानुक्रमणी जिज्ञासूनां परिचयसौकर्यार्थमत्रोपन्यस्यते।

(क) प्रथमपरिच्छेदान्तर्गताः कथाः —
(१) दानवीरकथा
(२) दयावीरकथा
(३) युद्धवीरकथा
(४) सत्यवीरकथा
(५) चौरकथा
(६) भीरूकथा
(७) कृपणकथा
(८) अलसकथा

(ख) द्वितीयपरिच्छेदान्तर्गताः कथाः —
(१) सप्रतिभकथा
(२) मेधाविकथा
(३) सुबुद्धिकथा
(४) वञ्चककथा
(५) पिशुनकथा
(६) जन्मबर्बरकथा
(७) सङ्गबर्बकथा

(ग) तृतीयपरिच्छेदान्तर्गताः कथाः —
(१) शस्त्रविद्यकथा
(२) शास्त्रविद्यकथा
(३) वेदविद्य कथा
(४) लोकविद्यकथा
(५) उभयविद्यकथा
(६) चित्रविद्यकथा
(७) गीतविद्यकथा
(८) इन्द्रजालविद्यकथा
(९) पूजितविद्यकथा
(१०) अवसन्नविद्यकथा
(११) अविद्यकथा
(१२) खण्डितविद्यकथा
(१३) हासविद्यकथा

(घ) चतुर्थपरिच्छेदान्तर्गतासु कथासु प्रथमं धर्मकथा :—

(१) तात्त्विककथा
(२) तामसकथा
(३) अनुशयिकथा

ततः परम् अर्थकथा :—

(४) महेच्छकथा
(५) मूढकथा
(६) बह्वाशकथा
(७) सावधानकथा

ततः परं कामकथा :—

(८) अनुकूलकथा
(९) दक्षिणकथा
(१०) विदग्धकथा
(११) धूर्त्तकथा
(१२) घस्मरकथा

अथ मोक्षकथा :—

(१३) निर्बन्धिकथा
(१४) निःस्पृहकथा
(१५) लब्धसिद्धिकथा

इत्थं साकल्येन चतुश्चत्वारिंशन्मितासु कथासु उत्तमाधमप्रकृतिभेदेन वैविध्यावगाहि-मानवीयजीवनादर्श-प्रणोदितानाम् अविगीतानामवगीतानाञ्च क्रियाकलापानां साभिनिवेशमनुसरणपुरस्सरं यथायथं समर्जितोर्जित-चरित्रोत्कर्षापकर्षाणां कथानायकानां परिचयप्रदानेन सममेव कथारम्भे प्रतिज्ञातं शौर्यसमुत्कर्ष-धीवैशारद्य-विद्यावैभव-पुरुषार्थचतुष्टयोपलम्भानां मानवजीवनस्य परमोपादेयकोटिनिविष्टानाम् विशदं विवरणमप्यत्र प्रसादगुणसम्भृते प्रसङ्गोन्मीलितसूक्तिरत्नराशिविभास्वरे कथाप्रबन्धे साधीयसा काव्यशिल्पेन निर्व्यूढं महाकविनेति ग्रन्थमिममधीतवतां सचेतसामविसम्वादिनी मतस्थितिः। ग्रन्थादस्मादुदाहरणीयानां प्रसङ्गानां सत्यपि भूयस्त्वे लेखविस्तरभिया केवलमेक एवाधस्तनः प्रसङ्गोऽत्र समुपन्यस्यते।

अभिनयव्यापृतो नटो रसास्वादं लभते न वेति नाट्यशास्त्रविषयकं विवादपदमधिकृत्य भूयसामालङ्कारिकाणां मतस्थितिर्निषेधकोटिमेवावगाहते। महाभाष्यकृतां महामुनिपतञ्जलिभगवत्पादानां मतस्थितिः पुनरत्र विधिकोटिं समवगाहते। तथा हि रसादिभ्यश्चेति सूत्रस्थे (5-2-95) महाभाष्ये रसिको नट इति प्रयोगदर्शनेन रतिहासादीनां नाट्यधर्माणां शृङ्गारवीरबीभत्सादीनां रचनाधर्माणां वा भावपदार्थ-प्रत्ययस्वरूपाणां नटनिष्ठत्वेन वीतविघ्ना प्रतीतिः समुदेतीति मतं प्राकाश्यमञ्चति। अस्माकं महाकविर्नृत्यविद्यकथायाम् भवभूति-प्रणीतस्य उत्तररामचरितस्य तृतीयाङ्के छायासीताभिधाने जानकी-विरहव्यथाविधुरस्य रामचन्द्रस्य चेष्टितानि सावेशमभिनयन् रामतादात्म्यापन्नो नटः कथमिव तनुं त्यक्त्वा रामेण सहाभेदमुपगत इति व्यावर्णयन् मतमिदनुमोदमानो दृश्यते। तदुक्तम्—

सारण्यानी स वटविटपी हन्त सैव स्थलीयं
सीता सैव स्पृशति हृदयं सोऽहमेवास्मि रामः।
एवं कान्ताविरहविलसद्रामतादात्म्यदिग्धो
नृत्यावेशान्मुनिरिव नटो रामसायुज्यमाप॥

सहृदयैर्जिज्ञासुभिरध्येतव्योऽयमैहिकामुष्मिकफलोपायनसम्भृतो महनीयः कथाग्रन्थ इति विनिवेद्य साम्प्रतमग्रेसरा भवामः।

महाराजाधिराजस्य शिवसिंहस्यैव राज्यकाले महाकविना मणिमञ्जरीनाम्नी नाटिका गोरक्षविजयं नाम नाटकञ्चेति दृश्यकाव्यद्वयमपि विरचितम्। तत्र प्रथमं मणिमञ्जरीसमाख्याया नाटिकायाः कथासारः सङ्क्षेपेणेह समुपन्यस्यते।

आसीत् पुरा चन्द्रसेनो नाम राजा। स चैकदा स्वप्नावस्थायां चन्द्रकान्तनाम्नो वाणिज्योपजीविनस्तनयां निरुपमरूपलावण्यशालिनीं मणिमञ्जरीतिनाम्ना प्रथितां व्यलोकयत्। ततः प्रभृति तस्यामासक्तमनाः स राजा तद्विरहप्रभवामार्त्तिं विनोदयितुं तां मनोरथ-प्रियतमां स्वकीय-प्रासाद-परिसरोद्देशवर्त्तिनि प्रमदवने उपाय-कौशलेन समानीय विकचकुसुमप्रहासिनि परिस्फीत-पल्लवाभोगसुभगे निकुञ्जे निभृतं मन्मथाराधनपरायणो बभूव। अत्रान्तरे राज्ञश्चन्द्र-सेनस्य ज्येष्ठा राज्ञी पद्मावतीति नाम्ना सुप्रथिता वृत्तमिदं स्वमनः-

शल्यभूतं विज्ञाय गुरुतरं मानमालम्ब्य परिहृतपतिसङ्गमलालसा पार्वतीव्रतानुष्ठानमुरीचक्रे । अथ सम्प्राप्ते व्रतान्तदिवसे पत्या सहैकत्रावस्थानं व्रतस्य साङ्गतासिद्ध्यर्थं परमावश्यककृत्यं मन्वाना राज्ञी पद्मावती यदा पत्युरन्तिकं प्रस्थानपरा बभूव तदा दैवात् सहसा प्रमदवनं प्रविष्टेन विध्वस्तलतापादपनिकुञ्जपुञ्जेन भीषणोन्नाद-प्रतिध्वनितदिगन्तेन वित्रासिताशेषप्रमदवन-रक्षाधिकृत-वर्गेण दुर्दान्तेनैकेन महिषेण प्रारब्धं प्रचण्डताण्डवमिति वार्त्तां विज्ञाय राजा चन्द्रसेनस्तं महिषं निहन्तुं यावत् प्रमदवनमभ्याययौ तावत् कान्तसङ्गमप्रतीक्षया तत्र चिरकालादवस्थितया महिषोत्पातेनानेन भयातिरेकात् सकुचोत्कम्पं विसंष्ठुलनिःश्वसितपरवशया वेपमानतनुवल्लर्या मणिमञ्जर्या पतिं स्तनोपपोडं समाश्लिष्टं विलोक्य गत्यन्तरमपश्यन्ती पद्मावती तया सह पत्युर्विवाहमङ्गलं निरवर्त्तयत् । इत्थं राज्ञी पद्मावती मणिमञ्जर्या सममेव स्वयमपि पर्यायशः पत्युः सङ्गमसौख्यमुपलभ्य व्रतान्तोचितं विधिं विधातुं समर्था सञ्जाता इत्येवमेवास्या नाटिकायाश्चिरन्तनपरिपाटीक्षुण्णं कथावस्तु समुपलभ्यते ।

शृङ्गाररसप्रवाहपरिप्लावितायामस्यां नाटिकायां सुविन्यस्तेषु श्लोकेषु महाकवेरादिरसोल्लासशालिनी प्रकृतिः प्रकाममभिव्यक्तिमुपेयुषी वाग्वैदग्ध्येन सचेतसां चेतो बलादावर्जयितुम् प्रभवति । तदिदमस्या मङ्गलश्लोकेन तावत् सुष्ठु परिस्फुटीभवति—

"आनन्देन जडीकृता नवनवोत्कण्ठारसाभ्यागता
लज्जारज्जुनिवर्त्तिताः क्षणमथो बिभ्रान्तकर्णोत्पलाः ।
इत्येवं नवसङ्गमोल्लसितयोर्दोलाविलासालसा
दृक्पाताः शिवयोरभिन्नवपुषोर्विघ्नं विनिघ्नन्तु वः ॥"

अतः परं महाकविः प्रकृतनाटिकान्तःसम्भृत-सुधारसास्वादमासादयितुं सहृदयान् पारिषदान् प्रार्थयते । तद्यथा—

"आनन्दाय रसोर्मिमग्नमनसामासाङ्कविश्रामणी—
वृत्तीनां परिशीलनाय यदिदं नाट्यं मया निर्मितम् ।
तत्सभ्यान्नवनाटिकामृतरसास्वादावधानश्रमं
याचे काव्यपथप्रयाणपथिकान् बद्धप्रणामाञ्जलिः ॥"

यौवनोपायनीकृतवरारोहहारितनुलतिकाया मणिमञ्जर्याः सौन्दर्यवर्णनपरश्चायं श्लोकसन्दर्भः रसिकानां मनोवशीकर्त्तुं नानल्पं काव्यकौशलं कलयन् विलोकयितुं शक्यम् । तद्यथा —

पीयूषावधिमाधुरीमधरयन् केनोपमेयोऽधरो
नेत्राभ्यामिव लज्जया जलनिधौ जातं न पङ्केरुहम् ।
अप्यस्या वचनामृतानि सरले शङ्केत कः कोकिले
तन्मन्ये सकलोपमानजयिनी सीमा गुणानां तनुः ।।"

पुनश्च तदीयं सौन्दर्यं भङ्ग्यन्तरेण महाकविर्वर्णयति । तद्यथा —

"काठिन्यं मुकुलोद्गमे मधुरिमा बालप्रवालाङ्कुरे
रक्ता मौक्तिकमालिका कुमुदिनीबन्धोर्लयोवीरुधि ।
मन्ये विश्वसृजेऽभ्यसूय मदनोऽमर्षादिवोत्सारयन्
सृष्टिं पूर्वविधेर्विधातुमपरामस्यां किमुद्यच्छते ।।"

प्रभाते नवोदितभास्करकरपरामर्शमवाप्य जृम्भाभिरामां कमलिनीमुद्दिश्य महाकविना विरचितमधस्तनं पद्यं किमपि मनोहरं दृश्यमुपस्थापयति । तद्यथा—

"आश्लिष्टा करपल्लवेन मुकुलव्याजाद्विमुद्रं मुखं
बालेवाम्बुजबान्धवेन नलिनी विस्मापयन्ती स्थिता ।
अप्यालीव समीपमेत्य मधुरारावैर्द्विरेफावली
मन्ये मानविमोचनाय रचयत्यस्याः पुरोवाचिकम् ।।

नाटिकान्ते महाकविना विन्यस्तः समेषां शुभाशंसनाशंसी श्लोकोऽयमधस्तनः परम्परादृतां परिपाटीमनुहरति । तद्यथा—

सन्तः सन्तु निरापदो विजयतां राजा प्रजारञ्जने
विप्राःप्राप्तशुभोदयाश्चिरममी तिष्ठन्तु निर्व्याकुलाः ।
काले सन्तु पयोमुचो जलमुचः सर्वाश्रमाणामियं
शस्यैः शस्यतरा धरापि नितरामानन्दकन्दायताम् ।।

चर्चेयं विस्तरभियात्रैव समाप्यते । अथापरं गोरक्षविजयनामकं यन्नाटकं महाकविना विरचितं तस्य कथावस्तु नाथसम्प्रदायानुयायिनां लब्ध-दिव्यसिद्धिवैभवानां योगिनां प्रभावमाहात्म्योद्भूताभिः कथाभिः प्रगुणीकृतं तदानीन्तने समाजे नितरां प्रख्यातिमञ्चति स्म । कमनीयाभिः कामोपचारविचक्षणाभिः कामिनीभिर्मदनमायामहिम्ना

वशम्वदीकृतस्य स्वगुरोर्मत्स्येन्द्रनाथस्य गोरक्षनाथेन हठयोगाचार्येण आगोपालाङ्गनप्रसृत्वर - दुर्द्धर्षतपश्चर्यावाप्तसिद्धिसम्पद्वृत्तान्तेन विहितो मायापाशविमोक्षोऽस्मिन् नृत्यगीतभूयिष्ठेऽभिनेयगुणसम्भृते नाट्ये महाकविना समुपस्थापितः। अत्र संस्कृतम्, प्राकृतम्, मैथिली चेति तिस्रो भाषाः प्रयोगपदवीमुपनीता विलसन्ति। रागवैविध्यभाजां गीतानामत्र बाहुल्यमस्य विशेषकमस्ति सम्पन्नम्। ग्रन्थान्ते समुपलभ्यमानायाः पुष्पिकायाः प्रामाण्यादस्य विद्यापतिकर्त्तृत्वं निश्चीयते। पुष्पिका च सैवम्—"सप्रक्रिय-महाराज - पण्डितवर-श्रीमद्विद्यापतिकविविरचितं गोरक्षविजयनाम नाटकं समाप्तम्।"

इत्थं महाराजधिराजस्य शिवसिंहस्यच्छत्रच्छायायां राजप्रसाद-सौख्यमनुभवन् महाकविः स्वजीवनस्य परमोल्लासमयं समयं समन्वभवत्।

साम्प्रतं प्राच्योदीच्यभारतभूभागे राज्यविप्लव-वधबन्ध - रणाभियानप्रभृतिभिः परमोग्रैर्व्यापारैः सामाजिक-जीवन-विघटनातङ्कसङ्कुलैः तुलुष्काधिष्ठितस्य राजतन्त्रस्य विसंष्ठुला स्थितिरस्माकमवधानं बलादाक्षिपति। कालेऽस्मिन् सुरत्राण-प्रमुख-पदमहम्पूर्विकयाधिकर्त्तुमीहमानानां सुरत्राणवर्गाणां मध्ये अन्तःकलहसमिद्धो व्यजृम्भत स्थाने स्थाने विद्रोहदावानलः। इत्थम्भूते व्यतिकरे स्वगतसङ्घर्षसंसक्तेषु दुर्मदतुलुष्कबलोन्मत्तेषु सुरत्राणेषु भारतीयैर्महीपतिभिर्यत्र तत्र स्वातन्त्र्यमुदघोष्यत परन्तु परस्तात् समरनिष्ठुरैराततायिभिः सुरत्राणबलैराक्रान्तानां तेषां तत् स्वातन्त्र्यं खद्योतज्योतिरिव क्षणदृष्टनष्टं व्यलोक्यत।

तदानीं मिथिलायाः परिपार्श्ववर्त्तिनि वङ्गजनपदे तात्कालिकेन गृहयुद्धेन तुलुष्कराजतन्त्रस्य स्थितिः विप्लवापन्नां दशामुपागता दृष्टिमायाति। गियासुद्दीननाम्नि तत्रत्ये तुलुष्कशासनकर्णधारे विप्लवाह्वाननसमुद्धुरकन्धरैः क्रूरकृत्यव्यसनिभिः साहसिकैस्तुलुष्कैः प्रसभं निहते, सैफुद्दीनहमजाशाहो नाम तुलुष्कप्रमुखः तत्रत्य सुरत्राणपदमधिचक्रे। अत्रान्तरे विसंष्ठुलामिमां राजतन्त्रस्थितिं पश्यता गणेशाभिधानेन राज्ञा प्रत्युत्पन्नमतिना शस्त्रबलेन गौडवसुन्धराधिपत्यं पाणिसात् कृतम्। वृत्तमिदं विज्ञाय राजकिल्बि-

षकारिणं स्वयङ्गृहीतगौडेश्वरपदं गणेशं पराजेतुं महता सैन्यसन्नाहेन प्रस्थितो जौनपुरस्थसुरत्राणप्रतिनिधिः गौडविषयमभ्येत्य तेन साकं समरसंसक्तो बभूव। परिपार्श्ववर्त्तिनि जनपदे घटनाचक्रस्य ईदृशं विवर्त्तनमालोक्य धर्मधुरीणो दीप्तशौर्यो मिथिलाधराधीश्वरः शिवसिंहो युद्धेऽस्मिन् गौडेश्वरस्य गणेशस्य सैन्यसाहाय्यं व्यधात्। ततश्च द्विगुणितसैन्यबलप्रवृद्धमनोबलेन गौडेश्वरेण समं रणासक्ता तुलुष्कवाहिनी भग्ना सती कान्दिशीकतां भेजे। विषमेऽस्मिन् सङ्कटापन्ने काले मिथिलेशस्य शिवसिंहस्य साहाय्येन लब्धविजयो गौडनरेशो गणेशस्तस्योपकारभारं प्रणामावनतेन मौलिना सविनयं स्वीकुर्वन् निष्कण्टकां गौडवसुधां बुभुजे। अथ गौडधराधिपे गणेशे कालेन दिवं याते तदीयस्तनयो नाम्ना यदुसेनो भोगैषणाक्षिप्तहृदयो भीरुप्रकृतिः स्त्रीव्यसनी सांसारिकसौख्यैश्वर्यस्पृहावशम्वदः स्वधर्माय जलाञ्जलिं प्रदाय समाश्लिष्टेस्लामधर्मो जजालुद्दीननाम्नात्मानं प्रख्यापयन् सुरत्राणप्रवरप्रसादात् गौडवसुन्धराधिपत्यं प्रापत्। तस्यैव स्वधर्मधूमध्वजस्यानेन दुष्कृत्येन नितरां कोपाविष्टो मिथिलेश्वरः शिवसिंहो रणाङ्गणे तमधमं भारतीयराजकुलापसदं पराजित्य तेनाधिकृताया गौडवसुन्धराया भागमेकं स्वराज्यायत्तं व्यधात्। इत्थं मिथिलेश्वरस्य शिवसिंहस्य विविधसमरावाप्तविजयार्जिता यशोगाथा प्रतिपत्तनं प्रतिपुरं प्रतिगेहं लोकगीतनेपथ्यमादधती समन्ततः सोल्लासं पुरन्ध्रिभिरगीयत। तदुक्तं पुरुषपरीक्षायाः समापनप्रसङ्गे महाकविना विद्यापतिना :—

'यो गौडेश्वरगज्जनेश्वररणक्षोणीषु लब्ध्वा यशो
दिक्कान्ताकुचकुन्तलेषु नयते कुन्दस्रजामास्पदम्।
तस्य श्रीशिवसिंहदेवनृपतेर्विज्ञप्रियस्याज्ञया
ग्रन्थं ग्रन्थिलदण्डनीतिविषये विद्यापतिर्व्यातनोत्॥"

एतच्च कीर्त्तिपताकायाः समापनप्रसङ्गेऽपि महाकविनानेन स्पष्टमेवोक्तम्—

"एवं श्रीशिवसिंहदेवनृपतेः सङ्ग्रामजातं यशो
गायन्ति प्रतिपत्तनं प्रतिपुरं प्रत्यङ्गणं सुभ्रुवः।"

इत्थं प्रजाजनमनःकुमुदकलाधरेण, श्रौतस्मार्त्तधर्माचरणप्रवणेन, अहरहः प्रवर्त्तितशास्त्रचर्चा-नृत्यसङ्गीत-काव्यगोष्ठीबन्धेन, प्रचुर-

दानसम्मानादिभिः परितोषितविद्वद्वृन्देन, भोजराजेनेवापरेण संस्कृत-विद्यासम्वर्धनलब्धयशोविभास्वरीकृतदिगन्तरेण, वापीकूपतडाग-देवालयारामनिर्माणनिरतेन मैथिलविप्रवंशावतंसेन महाराजाधिराजेन शिवसिंहेन धर्माधाराया मिथिलायाः स्वतन्त्रं प्रशासनं विदधता स्वराज्याभिषेकानन्तरं नीते वर्षत्रयमिते काले, गौडविषये सुरत्राण-सैन्यस्यानेन महीपतिना कृतस्य पराजस्य वार्त्तां विज्ञाय जौन-पुरस्थस्सुरत्राणः प्रतपत्तपनोग्रतेजसोऽस्य महीसुरमहीपतेर्निरन्तर प्रवर्धमानं प्रतापं निर्वापयितुं कृतसङ्कल्पोऽनल्पेन तुलुष्कबलेन परिवृतो मिथिलामभ्यषेणयत् । मिथिलेश्वरः शिवसिंहोऽपि दण्डनीति-विचक्षणेन महाकविना विद्यापतिना सङ्गतः सैन्यसन्नाहं विधाय प्रभूतेनोत्साहेन मिथिलां तुलुष्काक्रमणात् परित्रातुमग्रसरो भूत्वा तुलुष्कवाहिनीमवष्टभ्य तस्थौ। ततो न चिरात् सम्प्रवृत्तः शस्त्र-सम्पातनिष्ठुरः सङ्ग्रामः। रजोभरैराच्छन्नं नभोमण्डलम्। शस्त्रा-हतिभीतःक्वापि व्यलीयत व्योम्नि तिग्मदीधितिः। स्व-स्व-स्वामि-नामग्राहं युध्यतां सैन्यानां तुमुलैर्निनादैर्दिक्चक्रमाध्मातमभवत्। क्षत-विक्षत- विग्रहैर्विगलत्-क्षतजप्रवाहैर्भू पतितैर्योधवृन्दैर्विकचकिंशुक-समास्तृतेव ददृशे समरमेदिनी। रणाङ्गणे रुद्र इव रौद्रं रूपं दधानः शोणितशोणकृपाणपाणिः शत्रुसङ्घातं विकर्त्तयन् विकर्त्तन इवापरस्ते-जसा भ्राजमानः प्राणान् पणीकृत्य रणासक्तानां स्वसैन्यानां नेतृत्व महोत्साहेन विदधानः क्षणमितः क्षणं ततः सम्मुखागतान् सन्दष्टौष्ठ-पुटान् मधुपानविभ्रमन्नेत्रान् प्रहारोद्यतान् तुलुष्कचमूचरान् कालरात्रि-कटाक्षकरालेन कृपाणेन कृतान्तपुरीं प्रापयन् समरतत्परः समदृश्यत मिथिलेश्वरः। अथ दृश्यमिदं विषमं दर्शं दर्शं तुलुष्कबलाध्यक्षेण सैन्यव्यूहरचनायां सद्यः पुनर्नवीकृतायां प्रलयपवनवेगाध्मातैर्महार्णव-कल्लोलैरिव दुर्वारैः प्रचण्ड-तुलुष्क-सैन्यव्यूहैः सहसा समाच्छन्ने रणाङ्गणे मिथिलेश्वरः शिवसिंहो विलुप्तदर्शनो बभूव। नभोमण्डलं विदारयन् व्यजृम्भत तुलुष्कसैन्यानां सुदुःश्रवः अट्टहासः। विजिता तुलुष्कैर्मिथिला। अनेन दुरुदन्तेन सर्वत्र प्रससार प्रजाजनेषु हाहाकारः। विद्वांसः शिल्पिनो गायनाः कलाविदो वणिजः सर्वेऽप्यातङ्कलङ्घिताः अशरणाः म्लानमुखाः भिक्षाचराः समजायन्त। अथ विजयोन्मत्त-सुरत्राणाधिष्ठितेन तुलुष्कसैन्यसङ्घातेन राजपरिवारजनप्रधर्षण-

मुत्प्रेक्ष्य मिथिलेश्वरस्य शिवसिंहस्य प्रेष्ठः सखा विद्यापतिः सपरिवारां सपरिच्छदां दुर्दैवकदर्थितां महाराज्ञीं लखिमादेवीं वीतभयां विधातुं ततोऽपसार्य नेपालसीमान्तवर्त्तिनः सप्तरीसमाख्यजनपदस्य राजानं पुरादित्यनाम्ना विख्यातं निकषा समभ्याययौ। ततश्च तेन राज्ञा सबहुमानं स्थापिता मिथिलेश्वरमहाराज्ञी लखिमादेवी यथोचिताचारैः सत्कृतेन महाकविना समं स्वराजधान्यां, यत्र भर्त्तुरभ्यागमन-प्रतीक्षायां गवाक्षजालरन्ध्रसंसक्ताश्रुपरिपूर्णेक्षणा वेपमानेन हृदयेन दिनानि गणयन्ती चिन्तोद्वेगशोकदैन्यदुर्वहं कालं सा निनाय।

यत्र च निवसन् महाकविर्विद्यापतिः पुरादित्यस्य राज्ञो निदेशमनुसृत्य लिखनावलीत्यभिधानप्रसिद्धं दैनन्दिनव्यवहारोपयुक्तं ग्रन्थमेकं निबबन्ध। तदुक्तं महाकविना –

सर्वादित्यतनूजस्य द्रोणवारमहीपतेः।
गिरिनारायणस्याज्ञां पुरादित्यस्य पालयन्॥
अल्पश्रुतोपदेशाय कौतुकाय बहुश्रुताम्।
विद्यापतिस्सतांप्रीत्यै करोति लिखनावलीम्॥

अत्र लिखनशब्दः कर्मसाधनो देश्यभाषाप्रयोगप्रवाहपतितोऽत्र लेखयुक्तपत्रपर्यायतया संस्कृतपदपङ्क्तमपाङ्क्तेयोऽप्यनुप्रवेशितो देश्यशब्दप्रयोगपक्षपातिना महाकविना। सम्बोध्यभेदेन विषयानुरोधेन च लेखप्रकारो भेदमुपैति। यथोक्तं तत्रैव –

उच्चैःकक्षमध.कक्षं समकक्षं नरम्प्रति।
लिखने व्यवहारे च लिख्यते लिखनक्रमः॥

तदानीन्तने लोकव्यवहारे संस्कृतभाषा पत्रलेखनकर्मणि मिथिलायां समादृतासीदिति पुस्तकस्यास्य प्रामाण्यादवसीयते। अत्र जिज्ञासूनां विनोदाय द्वित्राणि पत्राणि ततः समुद्धृत्य विन्यस्यन्ते। तत्र उच्चैः कक्षं नरम्प्रति सम्बोध्यस्य पत्रस्य प्रकारो यथा—

"स्वस्ति प्रबलतरप्रतापार्कनिरस्त-रिपुतिमिरसंहार-निरवद्यराज-नीतिकल्लोलिनीकर्णधार - मर्यादापारावार - सङ्ग्रामसीमादुर्वारानेक राजचूडालङ्कारमणिमयूखमञ्जरीपिञ्जरीकृतचरणारविन्द -हृदयदेश-निवेशितगोविन्द - रिपुराजकंसनारायण-भवभक्तिपरायण-महाराजाधिराज - श्रीमदमुकदेवपादपद्मेषु समरविजयिषु अमुकस्थानात्

सेनापतिश्रीअमुकस्य सिंहासनतलकृतशिरसः प्रणतिपत्रीयम् । श्रीमद्देवानां प्रतापोदयात् कुशलमत्र । विशेषस्तु समागतहस्तपत्रं शिरसि निधाय सम्यक् समधिगतार्थं कुर्वन्नस्मि । गोचरस्तु श्रीमान् यवनराजः सम्प्रति गौडेश्वरमुद्दिश्य कृतप्रयाणो दिल्लीतश्चलितोऽस्तीति चारपुरुषेणागत्य कथितमस्ति ।

गौडेश्वरोऽपि दुर्गप्राकारपरिष्कारव्याकुलः सेनासङ्घटनपरायणश्च विद्यते । युद्धं करिष्यति सन्धानं वेति न ज्ञायते । ज्ञात्वा च पश्चाल्लिखिष्यामि । सम्प्रति (यत्समुचितं) तद्विधातुमादेष्टव्यमिति किम्बहुना ।"

अथाधः कक्षं जनं प्रति सम्बोध्यस्य पत्रस्योदाहरणभूतेऽधस्तने पत्रे श्वशुरालयस्थितां पुत्रीं प्रति मातुरुपदेशः शक्यते द्रष्टुम्—

"अमुकग्रामात् ठक्कुरराज्ञीअमुकदेवीनां परमाभङ्गुरमङ्गलासु कल्याणिनीश्रीअमुकदेवीषु शुभाशीः पत्रीयम् । कुशलमत्र तत्रत्यकुशल समीहामहे । कार्यञ्च ननान्दुरपरितोषेण सपत्नीकलहेन च श्रीमतीनां महती कुश्लेषवार्त्ता श्रूयते तेनोद्वेगो मनसि विद्यते । यद्यपिदुहितासन्ततिः पित्रोरुद्वेगनिमित्तमेवास्ति तथापि भवतीनां शीलैकधनानां सकलगृहकार्यकुशलानां गुरुभक्तिपरायणानां बहुविधासमञ्जसकथां श्रोतुन्न शक्यते । यद्यपि ननान्दा दुश्शीला, सपत्नी द्वेषिणी विरुद्धमाचेष्टते तथापि मौखर्यं विनिवार्य भवतीभिः शीलालम्बनमेव विधातव्यम् । वस्तुतस्तु प्रणतिसुरसा लोकद्वयोपकारिणी सौभाग्यसम्पत्करी स्वामिभक्तिः प्रतिक्षणमिङ्गिताज्ञानुसारिणी सर्वात्मना कर्त्तव्या । वैदेश्याद्यदितः खोजकरणार्थं मानुषो न गच्छति तदनुचितं क्षन्तव्यम् । सम्प्रति सन्देशत्वेन स्थूलपूग-श्लक्ष्णवराटिका-सिन्दूर-सुगन्धितैल-कुसुम्भरक्तवस्त्राणि परिग्रहीतव्यानि । वर्षाकालावसाने भवदीयो भ्राता भवदानयनार्थं गमिष्यत्येवेति ।"

पत्रेऽस्मिन् श्वशुरालयवासपरां ननान्दकदर्थितां सपत्नीविद्विष्टां पुत्रीं प्रति विनयोपदेशदानदक्षाया मातुर्वात्सल्यविह्वलं हृदयं प्रतिबिम्बितमवभासते । वैदश्यश्च खोजशब्दोऽत्रकुशलवृत्तान्तपरिज्ञानानुकूलव्यापारार्थकः प्रयुक्तो दृश्यते । व्यवहारविषयकस्य पत्रस्य आदर्शभूतं पत्रं यथा—

'सिद्धिः। अमुकामुकनामानश्चत्वारो भ्रातरो विवदमानाः परस्परं निस्सम्बन्धपत्रीं प्रयच्छन्ति। अस्माकं पैत्र्यं पैतामहञ्च साधारण स्थावरजङ्गमञ्च यद्धनमासीत् तत्तज्ज्येष्ठांशत्वेन ज्येष्ठस्य दत्त्वा सौदायिक-स्त्रीधनवर्जम् अक्षपूर्वकं विभाज्यं विभज्य यथाभागमस्माभिर्गृहीतम्। ततो ऽग्रे नः परस्परं कोऽप्यर्थे सम्बन्धो नास्तीति। अत्रार्थे साक्षिणोऽमुकामुका। कृता भूताश्चेति।"

इत्थं ग्रन्थेऽस्मिन्ननतिमहति विन्यस्तेषु चतुरशीतिमितेषु आदर्शभूतेषु पत्रेषु केषाञ्चिदेव पत्राणां स्थालीपुलाकन्यायेनात्र निदर्शनमुपस्थापितम्। वस्तुतस्तु एषां साकल्येनाध्ययनं मिथिलायां तदानीं लब्धप्रसरस्य राजतन्त्रस्य, समाजपरिशीलिताचारविचारजातस्य, धर्मशास्त्रोदित-व्यवहारविधानस्य च स्वरूपावगमाय पुष्कलं महत्त्वं बिभर्त्तीति नातिरञ्जितं वचः।

साम्प्रतं प्रागुक्तं कथासूत्रमनुसन्दधानोऽग्रेसरा भवामः। पतिप्रत्यावर्तन-प्रतीक्षायां निमग्नया राज्ञ्या लखिमादेव्या महाकविविद्यापतेर्मन्त्रणामादृत्य प्रार्थितेन सुरत्राणेन प्रत्यर्पितं मिथिलायाः प्रशासनाधिकारं निर्वोढुं पुनः स्वस्थानमागत्य राजसिंहासनमध्यास्य विद्यापतिसाचिव्येन मिथिलां प्रशासती राज्ञीलखिमादेवी यदा द्वादशवर्षापगमेऽपि पतिप्रत्यावर्त्तनवार्त्तां नापेलेभे तदा पर्णनरदाहपुरस्सरं यथाशास्त्रं तदीयमौर्ध्वदैहिकं कृत्यं निर्वर्त्य राज्यशासनकर्मणि दत्तावधाना बभूव। वैदुष्येण, कलाकलापवैशारद्येन, शासनतन्त्रव्यवस्थापनपाटवेन, सूक्ष्मेक्षिकोद्योत-समुल्लसितप्रज्ञाप्रकर्षेण च मिथिलायामपरा शारदेव तदानीमधि-विद्वत्समाजं सम्पूजिता सती राज्ञी लखिमादेवी समादरस्य परां कोटिमारूढाद्यापि मैथिलानामधिमानसं विराजते। संस्कृतकाव्यरचनायां तदीयं नैपुणमधस्तने श्लोके सुस्पष्टमभिव्यक्तिमासादयति—

भङ्क्त्वा भोक्तुं न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्कात्<br>
ताराकारास्तृषार्त्तः पिबति न पयसां विप्रुषः पत्रसंस्थाः।<br>
छायामम्भोरुहाणामलिकुलशबलां वीक्ष्य सन्ध्यामसन्ध्यां<br>
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः॥

अथ मैथिलललनाललामभूतायामस्यां राज्ञ्यां लखिमादेव्यां पतिलोकं प्रस्थितायां पद्मसिंहो नाम शिवसिंहमहाराजस्यानुजो मिथिलाराज्यं प्रपेदे। नृपतेरस्य राज्यकाले किमपि समुल्लेखनीयं कृत्यं सम्पन्नमभवन्नवेति विषयमधिकृत्य मिथिलादेशीयं-पुरावृत्तं मौनमेवावलम्बते। परन्तु, महाकविना निबद्धे शैवसर्वस्वसारसमाख्ये ग्रन्थे सुगुम्फितास्य महीपतेः प्रशस्तिरेतदीयं गुणोत्कर्षमित्थं विशदयति—

सङ्ग्रामाङ्गणसीमभीमसदृशस्तस्यानुजन्माभवद्
दानस्वल्पितकल्पवृक्षमहिमासौ पद्मसिंहो नृपः।
कैलासोदरसोदरीयति शरद्राकाशशांकीयति
प्रालेयाचलशेखरीयति यशो यस्यारविन्दीयति॥
विद्यामङ्गिरसः सुतस्य, विनयं रामस्य, वृत्तं मुनेः
शौर्यं सूर्यसुतस्य, धैर्यमवनेर्गाम्भीर्यमम्भोनिधेः।
दानं दानवनन्दनस्य सकलं सारं समुच्चिन्वता
धात्रा यः शरदिन्दुसुन्दरयशाः क्षोणीपतिर्निर्मितः॥

निरपत्येऽस्मिन् महीपतौ यथाकालं दिवमुपयाते तदीया पत्नी नाम्ना विश्वासदेवीति प्रथिता मिथिलेश्वरी समजनि। महामहिमशालिन्याः सकल-सद्गुणगणैकायतनीभूताया पार्वतीपरमेश्वरभक्तिभावसम्भृतस्वान्तायाः कर्मकाण्डोदीरित - धर्मानुष्ठान - रक्षणावेक्षणसम्वर्धन-गृहीतव्रताया अस्या निदेशादस्माकं महाकविविद्यापतिनाः शैवसर्वस्वसारः, शैवसर्वस्वसारप्रमाणभूतश्लोक सङ्ग्रहो गङ्गावाक्यावली चेति त्रयः ग्रन्था रचिताः। तत्र शैवसर्वस्वसारसमाख्यो ग्रन्थः शिवपूजनविधानं साङ्गोपाङ्गं विवृणोति। शैवसर्वस्वसारप्रमाणभूतः श्लोकसङ्ग्रहाख्यश्च ग्रन्थो नाम्नैव प्रतिपाद्यभूतं विषयं व्याकरोति। इह शैवसर्वस्वसारग्रन्थस्य विषयवस्तुजातं तद्विविदिषूणां जिज्ञासासमाधिमुद्दिश्य समासतः समुपन्यस्यते। अस्य मङ्गलाचरणश्लोको यथा-

सूर्याचन्द्रमसौ दृशौ तदुपरि ज्योतिर्मयं दर्शनं
बिभ्राणो गणयन्निव स्वमनघं विश्वैकबीजं वपुः।
धत्ते यः शिरसा सुधाकरकलामेणाङ्कमुद्रामयीं
देयादभ्युदयं त्रिकालविदयं देवो भवानीपतिः॥

अतः परं सर्वप्रथमं शिवमाहात्म्यमुद्घोष्य ग्रन्थकृता हरिहराद्वैततत्त्वं प्राकाश्यमानीतम् । ततश्च शिवभक्त-लक्षणस्य शिवभक्ति-माहात्म्यस्य शिव-स्मरण-कीर्त्तन-दर्शन-स्पर्शनजन्यफलसमुदयस्य च समुल्लेखः, शिवालयसम्मार्जन-फलाभिधानम्, शिवस्नपनफलकथनम् पयो-दधि-घृत-मधु-सर्वौषधि-पञ्चगव्येक्षुरस - सुवासिततैल - सचन्दन-सलिलपुष्पोदक - कर्पूरागुरुसम्मिश्रजल - शीतलतोय- कुशोदकादिभिः समनुष्ठितेन शिवस्नपनेन तत्तत्फलविशेषसम्प्राप्तिप्रतिपादनम्, शिवप्रीतिमुद्दिश्य समनुष्ठितानां गीतवादित्र-मुखवाद्यानांफलविशेषप्रदत्वाभिधानम्, अग्निहोत्र-सस्वराम्नायसम्पाठ-यज्ञानुष्ठानादिभिर्लभ्यानि फलानि शिवार्चनलभ्यस्य फलस्य कोट्यंशेनापि नैव साम्यमावहन्तीति-प्रतिपादनम्, सरित्-समुद्र-तडाग-पुष्करिणीतीर-वनपर्वत-गिरिशिखर-गह्वर-तीर्थायतन-स्वगृहेषु विहितस्य शिवार्चनस्य सकलयज्ञानुष्ठान-सम्भवफलप्रदत्वकथनम्, मासभेदेन दिवससङ्ख्याभेदेन पर्वदिवस-भेदेन तिथिविशेषभेदेन पूर्वाह्ण-मध्याह्न-प्रदोषकालभेदेन शिवलिङ्ग-संख्याभेदेन च शिवार्चनस्य फलविशेषकथनम्, शिवपूजनविधाप्रतिपादनम्, शैलेन्द्रनील-सुवर्ण-रजत-पित्तल-कांस्य-मृत्तिकानिर्मितानां लिङ्गानां पूजनस्य फलविशेषाधानक्षमत्वकथनम्, अर्घपात्रपरिमाण-मभिधाय विविधद्रव्यघटितैस्तैस्तैरर्घपात्रैः पुष्प-फल-गन्धतोय-पञ्च-गव्यप्रभृतिसम्भृतैर्विशिष्टार्घदानपुरस्सरं शिवपूजनस्य फलवैशिष्ट्य-कथनम्, कालागुरु-साज्यगुग्गुलु-देवदारु-कर्पूर-श्रीखण्ड-धूपसमर्पणस्य फलविशेषप्रदत्वम्, दीप्तदीपवृक्षस्य समर्पणेन फलविशेषलाभः, शिरसा ललाटेन वक्षसा पाणिभ्याञ्च शिवोद्देश्यक-दीप्तदीपधारणस्य विशिष्ट-फलप्रदत्वम्, कार्त्तिकेमासि शिवायतने सप्रभदीपदानस्य सुप्रभ-दीपमालिका-विन्यासस्य प्रभोद्भासि-दीपवृक्ष - संस्थापनस्य च विलक्षणफलाधायकत्वम्, शिवप्रीतिमुद्दिश्य विहिततत्तद्द्रव्यविशेष-सम्भृत-नैवेद्यसमर्पणस्य फलानां समुल्लेखः, काञ्चनाभरण-वसन-यज्ञोपवीत-दर्पण-मायूर-व्यजनतालवृन्त-चामर-च्छत्र-भेरी-मृदङ्ग - धेनु-वृषभ-भूमि-ग्राम-दासदासी-घण्टा-वितान-महाध्वज-ध्वजमाला-मौक्तिक-मण्डप-दोला-शिवमूर्त्तिप्रभृतीनां प्रदानेन फलातिशयसम्प्राप्तिवर्णनम् । ततश्च नीराजनस्य जपस्य प्रणामस्य रुद्राक्षधारणस्य शिवलिङ्ग-स्थापनस्य च फलान्यभिधाय शिवपूजने विहिताविहितपुष्पाणां

समुल्लेखानन्तरं शिवव्रतस्य फलञ्चोक्त्वा शिवोद्देश्यकजयघोषस्य कर्त्तव्यतायाः समुल्लेखेन समं निबन्धोऽयं ग्रन्थकृता परिसमाप्तिमुपनीतः। ग्रन्थान्ते चोपलभ्यमानः श्लोकः पुनरपि हरिहराद्वैतं प्रतिपादयन्नस्माकं साम्मुख्यमभ्येति। यथा—

स्वस्त्यस्तु नस्तुहिनरश्मिभृतः प्रसादा
देकं वपुः श्रितवतो हरिणा समेत्य।
यन्नाभिपङ्कजसहोत्थमृणाललीला
माविष्करोति हृदि यस्य भुजङ्गराजः।

अथ गङ्गावाक्यावलीतिनाम्ना प्रथितो यश्चापरो निबन्धस्तत्र साक्षाद् धर्मस्वरूपां सर्ववेदात्मिकाम् अखिलयज्ञानुष्ठानमयीम्, कृच्छ्रातिकृच्छ्रतपः - सङ्घातमयीम् अशेषतीर्थमयीम्, अष्टाविंशतिकोटिपरिमित-समस्त-देवमयीम् सर्वोत्कृष्टाम्, अभीष्टवरदाम्, पुण्यसलिलां गङ्गाम् अधिकृत्य महाकवेर्विश्वकोषात्मिका प्रज्ञासम्पत् प्रकाशमुपयाति। ग्रन्थस्यास्य मङ्गलाचरणश्लोको यथा —

"रूपं साक्षात् प्राप्तमैशं द्रवत्वम्
पुञ्जीभूतं सर्वगीर्वाणतेजः।
व्यक्तीभूतम्ब्रह्म विघ्नं निहन्या -
दारम्भेऽस्मिन् गाङ्गमम्भो मदीयम्॥"

ग्रन्थेऽस्मिन् गङ्गाया नामस्मरणम्, नामसङ्कीर्त्तनम्, माहात्म्यश्रवणम्, तीरसेवनम्, गङ्गामुद्दिश्ययात्राविधानम्, गङ्गामुपेत्य तदीयपावनसलिलस्पर्शनम्, गङ्गाविषयिण्याः श्रद्धाभक्तिभावनायाः गङ्गायामनुष्ठेयेषु कृत्येषु विशेषाधानहेतुत्वम्, भारत - वर्षमभिव्याप्य संसर्पन्तीनां पुण्योदकप्रवाहप्रथितानां नदीनां नामानि, तासु सर्वास्वपि नदीषु गङ्गा श्रेष्ठतमा, गङ्गाद्वारे स्नानेन विश्वजिदध्वरलभ्यस्य पुण्यस्य लाभः, गङ्गास्नानविधानम्, गङ्गायामनुष्ठेयानि कृत्यानि, गङ्गातीरवर्त्तिषु तत्तत्तीर्थेषु समनुष्ठितानां स्नानाह्निकदेवार्चनदानादीनां कृत्यानां सविशेषफलप्रदत्वम् गङ्गासागरसङ्गमस्नानस्य माहात्म्यमित्येवम्विधा विषयाः सप्रमाणमत्र विवृताः समुपलभ्यन्ते। ग्रन्थस्यास्य समाप्तश्लोको यथा—

यावद् गङ्गा विभाति त्रिपुरहरजटामण्डलं मण्डयन्ती
मल्लीमाला सुमेरोश्शिरसि सितमहावैजयन्ती जयन्ती ।
याता पातालमूलं स्फुरदमलरुचिश्शेषनिर्मोकवल्ली
तावद् विश्वासदेव्या जगति विजयतां गाङ्गवाक्यावलीयम् ॥

निसर्गादेव साम्बसदाशिवनपर्याभिरुचिशालिन्याः स्वर्णतुलादान-प्रभृति - महादानसमर्जित - कुन्देन्दुधवलकीर्त्तिचमत्कृतविबुधवनितायाः साध्वीशिरोमणिस्वरूपाया मिथिला-महीमण्डलपरिपालनप्रवीणाया राज्या विश्वासदेव्याः प्रशस्तिम् उपमोत्तमया वाचा शैवसर्वस्वसारे महाकविरित्थं पल्लवयति -

'दुग्धाम्भोधेरिव श्रीर्गुणगणसदृशे विश्वविविख्यातवंशे
सम्भूता पद्मसिंहक्षितिपतिदयिता धर्मकर्मैकसीमा ।
पत्युः सिंहासनस्था पृथुमिथिलमहीमण्डलं पालयन्ती
श्रीमद्विश्वासदेवी जगति विजयते चर्ययारुन्धतीव ॥
इन्द्रस्येव शची समुज्ज्वलगुणा गौरीव गौरीपतेः
कामस्येव रतिः स्वभावमधुरा सीतेव रामस्य या ।
विष्णोः श्रीरिव पद्मसिंहनृपतेरेषा परा प्रेयसी
विश्वख्यातनया द्विजेन्द्रतनया जागर्त्ति भूमण्डले ॥

लीलालोलावनाली-द्विजनिचयचलद्वीचि-विस्तारभार —
प्रव्यक्तोन्मुक्तमुक्ताफलतरलतरद्बिन्दुसन्दोहवाहः ।
पुष्यत्पुष्पौघमालाकुल-ललितलसद्भृङ्गसङ्गीतसङ्गी
श्रीमद्विश्वासदेव्याः समरुचिरुचिरो विश्वभागस्तडागः ॥

नित्यं देवद्विजार्थं द्रविणवितरणारम्भसम्भावितश्री —
र्धर्मज्ञा चन्द्रचूडप्रतिदिवससमाराधनैकाग्रचित्ता ।
विज्ञानुज्ञाप्य विद्यापतिकृतिनमसौ विश्वविख्यातकीर्त्तिः
श्रीमद्विश्वासदेवी विरचयति शिवं शैवसर्वस्वसारम् ॥"

अथ राज्ञ्यां विश्वासदेव्यां नश्वरं शरीरं विहाय शिवसायुज्यमुपगतायां तस्या निरपत्यतया आदिराजस्य सिद्धपुरुषकामेश्वरस्य द्वितीयात्तनयाद्भवसिंहात् समुत्पन्नस्य महाराजदेवसिंहस्य अनुजो हरिसिंहो मिथिलामशासत्। ततः परं तदीयस्तनयो नाम्ना नरसिंहदेवो दर्पनारायण इति विरुदेन प्रथिमानमुपेतो विश्रुतपराक्रमोत्कर्षो मिथिलैश्वर्येण भ्राजमानो विलोक्यते। अस्यैव महीपतेर्निदेशमनुसृत्य महाकविना दायभागव्यवस्थापनपरो विभागसारसमाख्यो निबन्धो व्यरचि। ग्रन्थस्यास्य मङ्गलाचरणश्लोकोऽपि ग्रन्थप्रतिपाद्यस्य सम्पद्विभागसमुद्भवविवादपद - विनिर्णयस्य प्रतिबिम्बं विभर्त्ति। तद् यथा—

"गङ्गा मेऽसौ ममापि प्रथय कथमहो वैष्णवीति प्रसिद्धेः
किन्त्वस्यां मेऽस्ति भोगः स तु भवतु तथा भेदभाजःप्रमाणम्।
भिन्नोऽहं कोऽत्र साक्षी विधिरिति विधिना सस्मितं वीक्ष्यमाणौ
पायास्तां निर्विवादौ सपदि हरिहरौ व्यङ्ग्यमात्रोत्तरान्नः॥

ग्रन्थेऽस्मिन् विवेच्यकोटिनिविष्टानां विषयाणां समासतोऽत्र समुल्लेखो विधीयते। तत्रादौ दायभागपदार्थमभिधाय दायस्वरूपकथनम्, दायविभाग-विधान-निरूपणम्, विभाज्यदायस्वरूपविचारः, दायरूपेण प्राप्तस्य भागस्य ग्रहणविषये अनर्हत्वापादकानां कारणानां समुल्लेखः, गृहीतस्वस्वदायभागेषु भ्रातृषु पूर्वं संस्कृतैर्ज्येष्ठैर्भ्रातृभिरविहितोपयनादिसंस्कारा भ्रातरो भगिन्यश्चानूढाः सति पैतृके धने तस्मादसति च तस्मिन् स्वांशात् समुद्धृत्य यथायथं नियतं संस्कार्या इति कथनम्, विभाज्यदायनिरुपणम्, दायविभागप्रकल्पनम् स्त्रीधनस्य स्वरूपं निरूप्य तत्प्रकारोल्लेखपुरस्सरं तद्विभागव्यवस्थापनम्, सामान्यतोऽग्राह्यस्यापि स्त्रीधनस्य पत्यादिभिः परिस्थितिविशेषेषु ग्राह्यत्वकथनम्, अनावश्यकं व्ययमुद्दिश्य पत्यादिभिर्गृहीतं स्त्रीधनं तस्यै सवृद्धिकं देयमिति व्यवस्थापनम्, स्त्रियां प्रमीतायां तदीयं धनं सर्वं तत्प्रभवाः पुत्राः कुमार्यो दुहितरश्च समं भजेयुः, समूढाभ्यो दुहितृभ्यो, दुहितृसुताभ्यश्चानूढाभ्यः समूढाभ्योवा मातृकाद्रिक्थात् प्रीतिसम्मानपूर्वकं किञ्चिद् देयमिति व्यवस्थापनम्, गुप्तरूपेण सञ्चितस्य धनस्य विभागः, वर्णभेदेन दायविभागनिरूपणम्,

पूर्वं विभक्तदायानां सवर्णासम्भवेषु सुतेषु दायभागप्रकल्पनामधिकृत्य विचारः, द्वादशप्रकाराणां पुत्राणामुल्लेखानन्तरं पितुर्धनस्य ग्रहणे तेषां यथायथमधिकारनिरूपणम्, भ्रातृषु ज्येष्ठस्य ज्येष्ठांशरूपेण दायभागविशेषस्य ग्रहणौचित्यम्, पुमपत्यरहितस्य पितुर्दायग्रहणे पुत्रवत् तत्सुताया दायग्रहणाधिकारकथनम्, मातुर्धनस्य ग्रहणाधिकारोल्लेखः, जीवत्यपि पितरि परिस्थितिविशेषानुरोधेन पुत्राणां दायभागग्रहणाधिकारः, सवर्णासम्भवापत्यस्य दायभागग्रहणेविशेषाभिधानम्, दायार्हबन्धुजनाभावे निरपत्यस्य आचार्यस्य दायभागःपर्यन्ते तदन्तेवासिगामी, ब्राह्मणातिरिक्तस्य निरपत्यस्य धनं सर्वाभावे राजग्राह्यम्, ब्रह्मस्वस्य राज्ञा बलाद् ग्रहणे दोषकथनम्, बालदायगतं धनं तावद्राज्ञा रक्षणीयं यावद् दायार्हो द्विजन्मा बालो विहितसमावर्त्तनसंस्कारो यौवनं प्रतिपद्येतेति कथनम्, विभक्तानामपि भ्रातॄणां पित्रा भ्रात्रा पितृव्येनापिवा प्रीतिवशात्पुनःसंसृष्टानां धनस्य पुनर्विभागकथनम्, ततश्च पर्यन्ते विभागनिर्णयो दायादेषु विभागधर्मसन्देहे समुत्पन्ने सति ज्ञातिभिर्भागलेख्येन विधेय इति कथनेन समं ग्रन्थोऽयं समाप्तिमेति ।

ग्रन्थेऽस्मिन् नारद-शङ्खलिखित-मनु-याज्ञवल्क्यबृहस्पति-विष्णु-बौधायन-कात्यायन - वशिष्ठ-व्यास-देवलापस्तम्ब - गौतमप्रभृतीनां प्राचां स्मृतिकाराणां वचनानि ग्रन्थकृता प्रमाणरूपेण समुद्धृतान्युपलभ्यन्ते । स्मृतिपरम्पराप्रतिष्ठितोऽयं निबन्धो विवादभूयस्त्वसङ्कुलेन दायभागसमाख्येन विवादपदेन समं समुद्भूतस्य व्यवहारजातस्य विनिर्णयार्थं मिथिलेशस्य नरसिंहदेवनृपतेः कालादारभ्य चिराय मिथिलायां न्यायाधिकरणेषु प्रमाणभूतग्रन्थस्य नितरामादरास्पदं पदमलभतेति प्राचां मुखादाकर्ण्यते । मिथिलेशस्यास्य प्रशस्तिमधिकृत्य महाकविना सन्दब्धःश्लोकश्चात्रैवमुपलब्धोऽधस्तात् सम्प्रदर्श्यते –

अस्ति श्रीनरसिंहदेवमिथिलाभूमण्डलाखण्डलो
भूभृन्मौलिकिरीटरत्ननिकरप्रत्यर्चिताङ्घ्रिद्वयः ।
आपूर्वापरदक्षिणोत्तरगिरिप्राप्तार्थिवाञ्छाधिक—
स्वर्णक्षोणि-मणिप्रदान-विजित-श्रीकर्णकल्पद्रुमः ॥

मिथिलेश्वरस्यास्य वदान्यशिरोमणेर्नरसिंहदेवस्य ज्यायसो धर्मपत्नी परमसौभाग्यशालिनो नाम्ना धीरमतीति सुविश्रुता मिथिलाया जनमानसेऽद्यापि भास्वरं प्रतिबिम्बं बिभर्त्ति। पतिदेवतानां पुरन्ध्रीणां कनिष्ठिकाधिष्ठितं पदमध्यासीना वाञ्छाधिकप्रदान-सम्प्रीणिताशेषयाचकजनोद्गीतवदान्यतातिशयगुणोपहसितकल्पलता-कीर्त्तिः सेयं महाराज्ञी धीरमती इष्टापूर्तकर्मानुष्ठानप्रावण्येनानुपमेन मिथिलायाश्चिरन्तनैर्धर्माचरणरोचिष्णुचरित्रैः सरस्वतीसमाराधनैक-धनैः सुधीसमाजैः सादरं संस्मर्यंते। अस्याः पुण्यशीलसमुल्लसित-स्वान्ताया महाराज्ञ्या निदेशमनुरुध्य महाकविरस्माक दानवाक्यावली समाख्य सुप्रसिद्धं ग्रन्थं निबबन्ध यत्र दानकर्मानुष्ठान-प्रसक्तानां तदनुप्रसक्तानाञ्च विषयाणां सुविशदं सप्रमाणञ्च विवरणम्प्राका-श्यमासादयति। ग्रन्थस्यास्य काव्य-सम्पत्समृद्धं मङ्गलाचरण-श्लोकद्वय तदनुषक्तञ्च महाराज्ञीधीरमतीप्रशस्तिवर्णनसमुज्ज्वलं श्लोकजातमिहाधस्तादुपन्यस्यते। तथा हि—

'वन्दे मुकुन्दस्य पदारविन्दं
वन्दारुवृन्दारकवृन्द-वन्द्यम्।
मन्दाकिनी यन्मकरन्दबिन्दु—
सन्दोह-सन्देहधियं ददाति॥

त्रैलोक्याधिपतेः पदत्रयभुवं दैत्याधिपं याचतो
दत्तां सत्त्वमयेन तेन वसुधामेवाग्रतो गृह्णतः।
देवार्थे बलिनं बलिं छलयतोऽप्यस्मै हरेस्तुष्यतः
स्वाराज्य-प्रतिभू-भविष्णु सपदि स्वस्त्यक्षरं पातु वः॥
श्रीकामेश्वर-राजपण्डितकुलालङ्कारसारः श्रिया—
मावासो नरसिंहदेवमिथिलाभूमण्डलाखण्डलः।
दृप्यद्दुर्धर-वैरिदर्प-दलनोऽभूद्दर्पनारायणो
विख्यातः शरदिन्दुकुन्दधवलभ्राम्यद्यशोमण्डलः॥
तस्योदारगुणाश्रयस्य मिथिलाक्ष्मापालचूडामणेः
श्रीमद्धीरमती प्रिया विजयते भूमण्डलालङ्कृतिः।
दाने कल्पलतेव चारुचरिते यारुन्धतीव स्थिरा
या लक्ष्मीरिव वैभवे गुणगणे गौरीव या गण्यते॥

वापी पुण्यजलाधिका सुविमला विज्ञानवापीसमा
रम्यं तीर्थनिवासिवासभवनं चन्द्राभमभ्रंलिहम् ।
उद्यानं फलपुष्पनम्रविटपच्छायाभिरानन्दनं
भिक्षुभ्यः सरसान्नदानमनघं यस्या भवान्या इव ॥
लक्ष्मीभाजः कृतार्थनिकृत सुमनसो या महादानहेम —
ग्रामै राजीवराजीबहलतरपरागाप्तरागैस्तडागैः ।
विज्ञानुज्ञाप्य विद्यापतिमतिकृतिनं सप्रमाणामुदारां
राज्ञी पुण्यावलोका विरचयति नवां दानवाक्यावलीं सा ॥

ग्रन्थेऽस्मिन् दानमधिकृत्य निबद्धानां विषयाणां समासतोऽत्र परिचयः प्रस्तूयते । तथा हि वेदोक्तेषु सत्कर्मसु दानस्य श्रेष्ठतमत्वाद् दानेनैव वित्तं साफल्यमुपैति । दानविवर्जितं वित्तं वित्तवतोऽनर्थाय जायते । यथेष्टस्य विभवस्य सम्प्राप्तिमिह जीवने सर्वथालीकल्पनां मत्वा ग्रासादर्धमपि ग्रासं याचमानाय जनाय प्रतिपादयेत् । कलियुगे दानमेव सकलपापपरिक्षयकारणम् । दानमेव गृहस्थानां परमो धर्मः । न्यायार्जितस्य धनस्य देशकालपात्रानुरोधेन यथाविधि दत्तं दानमनन्तफलम् । शास्त्रोक्त-लक्षणलक्षिताय पात्राय श्रद्धया प्रतिपादनं दानस्य स्वरूपम् । दाता, प्रतिग्रहीता, श्रद्धा, धर्मोपार्जितदेय-द्रव्यम्, प्रशस्तो देशः, विहितः कालश्चेति षडङ्गानि दानस्य । पात्रत्वप्रयोजको दातृत्वप्रयोजकश्च गुणसमुच्चयः, पात्रस्य दातुश्च अनर्हत्वहेतुभूता दोषाः । दाय-लाभ-क्रय-जय-पर्युदञ्चन-सेवावृत्ति-सत्-प्रतिग्रह-लभ्यस्य वित्तस्य धर्म्यत्वम्, तस्यैव च देयद्रव्यतया दानविधौ विनियोगो विधेयः । देशविशेषे कालविशेषे च दुर्लभस्य वस्तुनस्तत्तद्देशकालविशेषानुरोधेनैव दानार्हत्वम् । सर्वस्वं गृहञ्च वर्जयित्वा कुटुम्बभरणादवशिष्टमेव धनं दानार्हम् । परिभुक्तस्य अनुपयुक्तस्य मलिनस्य च पदार्थस्य दानानर्हत्वम् । दानार्हकालविचारः । सङ्क्रान्तौ राहूपरागे, व्यतीपातयोगे, आषाढकार्त्तिक - फाल्गुनमासीय-पूर्णिमा-तिथिषु, तुलायां मकरे मेषे चार्कसङ्क्रमणे, यज्ञोत्सवविवाहजातकर्म-कालेषु च दत्तस्य दानस्य महाफलत्वम् । दानार्ह-देशनिरूपण-प्रस्तावे पुण्यावहानां भारतभूभागविशेषाणां परिचयः । तत्र सेतुतीर्थादारभ्य हिमाचल-पर्यन्त विस्तृतस्य कर्मभूमि-प्रथामुपेतस्य भारतवर्षस्य ब्रह्मावर्त्त-ब्रह्मर्षिदेशमध्यदेशार्यावर्त्त-यज्ञियदेशसंज्ञकेषु तत्तल्लक्षण-लक्षितेषु

भूभागेषु दानकर्मानुष्ठानस्य प्राशस्त्यम् । चातुर्वर्ण्य-व्यवस्थाविधुराणां देशानां म्लेच्छदेशत्वात् दानकर्मानर्हत्वम् । गोमयोपलिप्त - गृहाजिर-महातीर्थाश्रम-नदीतीर-कूपारामसरोवरोपकण्ठस्थितेषु स्थानेषु सर्वेषां देवानां सदैव सन्निधानात्तत्र दानेन कोटिगुणाधिकस्य पुण्यस्य लाभः । गोभूमि-तिल-सुवर्ण-वसनादीनि न्यायार्जितानि देयद्रव्याणि गङ्गादिपुण्यसरिद्देशे राहूपरागादिकाले स्नानशौचाचारपूतः प्राङ्मुखः कुशोदकपाणिर्दाता सुशीलाय विद्यासम्पन्नाय अकृतोपकाराय उदङ्मुखाय ब्राह्मणाय श्रद्धापुरस्सरं सदक्षिणं दानं यथाशक्ति दद्यादिति दानविधिः । देयद्रव्याणामधिष्ठातृदेवताः । तत्तद्देयद्रव्याणां प्रतिग्रहप्रकारवैविध्यम् । देयद्रव्याणां हिरण्यरजत-भूषण-तैजसपात्र-जलपात्र-पानीय-रत्न - गृह-गो-वृषभ-महिषी - तुरंग-सवत्सकपिलगवी-सालङ्कार - विविधवर्णगवी - गुडादिकल्पितधेनु - गुड - घृत - लवण-पूगादिभार-सिन्दूरभार-कृष्णाजिन-भूमि - भोज्यान्न-गोरसेक्षुरस- मधु-पानक-तैल-गन्ध-दीप-ताम्बूल-फल-पुष्प-पादपाराम-शय्यासन-पादपीठ-छत्रोपानह-काष्ठपादुका-वाहन-दासदासी-शालग्रामशिला - व्यजनेन्धन-पुस्तक-यज्ञोपवीत-वसन - पायसापूप-बहुवस्त्र - चित्रमाल्यादीनां दानविधानव्यवस्थापनम् । ततश्च ऋतु-मास-तिथि-सङ्क्रान्ति-नक्षत्र-विशेषेषु नैयत्येन विहितानां देयद्रव्यविशेषाणां दानेन विशिष्ट-फलसम्पत्तिकथनम् इत्येवं दानविधिप्रसक्तानुप्रसक्तानामशेषाणां विषयाणां ग्रन्थेऽस्मिन् कर्मकाण्डधुरीणेन महाकविना कृतः समावेशो ग्रन्थस्यास्य परमोपयोगितां प्रमाणयति । ग्रन्थान्ते च समुपलभ्यतेऽधस्तनः समापनश्लोकः—

यावत्स्वर्गतरङ्गिणी हरजटाजूटालमालम्बते
यावद्विश्वविकासविस्तृतकरः सूर्योऽयमुज्जृम्भते ।
यावन्मण्डलमैन्दवं विजयते शम्भोश्शिरोमण्डले
तावत् कीर्तिलतेयमस्तु सफला देव्यास्सतां श्रेयसे ॥
निबन्धानखिलान् वीक्ष्य श्रीविद्यापतिसूरिणा ।
दानवाक्यावली देव्याः प्रमाणैर्विमलीकृता ॥

अथ महाराज-श्रीनरसिंहदेवो जरावस्थापन्नो राज्यभारनिर्वहणाय ज्येष्ठं तनयं प्राज्यप्रतापं विनयविभूषणं प्रज्ञासम्पत्समृद्धं चारुचरित्रं

धर्मनीतिनिष्णातं सतामाश्रयस्थानभूतं नाम्ना धीरसिंह इति सुप्रक्षितं नृपतिपदासीनं व्यधात्। रीतिरियमेतद्वंशोद्भवैर्नृपतिभिः प्राक्तनैश्चिराय समनुसृतोपलभ्यते। सोऽयं मिथिलाधिपतिर्धीरसिंहो भैरवसिंहस्यानुजप्रवरस्य प्रशासनपाटव सौजन्यसमलङ्कृतचरित्रोत्कर्षं विनयप्रकर्षं दण्डनीतिवैशारद्यञ्चालोच्य सामन्तराजविरुदेन तं संभावयामास। मिथिलेश्वरेऽस्मिन् सुगृहीतनामधेये धीरसिंहे मिथिलां प्रशासति तदाश्रितो महाकविर्विद्यापतिस्तदीयां विज्ञापनामादृत्य शाक्तागमपुराणोपवर्णित-शारदीयदुर्गापूजन-विधिविषयकं दुर्गाभक्तितरङ्गिणीसमाख्यं कर्मकाण्डभित्तिप्रतिष्ठितं ग्रन्थरत्नं व्यरचयत्। ग्रन्थस्यास्य प्रारम्भे मङ्गलश्लोकयुग्मं क्रमशो गणपतिनमस्कारात्मकं समुचितेष्टदेवता-विषयकञ्चोपनिबध्य महाराजस्य धीरसिंहस्य तदनुजस्य भैरवसिंहस्य च प्रशस्तिकीर्त्तनपुरस्सरं प्रकृतग्रन्थनिबन्धनार्थं मिथिलेश्वरेण कृता विज्ञापना च व्यावर्णिता महाकविना। तद्यथा —

"अभिवाञ्छितसिध्यर्थं पूजितो यः सुरैरपि।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥
भक्त्यानम्रसुरेन्द्रमौलिमुकुट-प्राग्भारतारस्फुरन् —
माणिक्यद्युतिपुञ्जरञ्जितपदद्वन्द्वारविन्दाश्रयः।
देव्यास्तत्क्षणदैत्यदर्पदलनासंवित्प्रहृष्टामर —
स्वाराज्य-प्रतिभूर्भवत्वणुकरुणागम्भीरदृक् पातु वः॥
विश्वख्याततयो (नृसिंहतनयः) प्रौढप्रतापोदयः
सङ्ग्रामाङ्गणलब्धवैरिविजयः कीर्त्याप्तलोकत्रयः।
मर्यादानिलयः प्रकामविनयः प्रज्ञाप्रकर्षाश्रयः
श्रीमद्भूपतिधीरसिंह - विजयो राजत्यमोघाश्रयः॥
शौर्यावर्जितपञ्चगौडधरणीनाथोपनम्रीकृतानेको-
त्तुङ्गतुरङ्गसङ्गतसितच्छत्राभिरामोदयः।
श्रीमद्भैरवसिंहदेवनृपतिर्यस्यानुजन्मा जयत्या-
चन्द्रार्कमखण्डकीर्त्तिलसितः श्रीरूपनारायणः॥
देवीभक्तिपरायणः श्रुतिमुखप्रारब्धपारायणः
सङ्ग्रामे रिपुराजकंसदलनप्रत्यक्षनारायणः।
विश्वेषां हितकाम्यया नृपवरोऽनुज्ञाप्य विद्यापतिं

श्रीदुर्गोत्सवपद्धतिं स तनुते दृष्ट्वा निबन्धस्थितिम् ॥"

अथात्र ग्रन्थे तरङ्गद्वितयप्रविभक्ते विन्यस्तानां विषयाणां परिचयार्थं समासतस्तेषां समुल्लेखो विधीयते। तत्र प्रथमे प्रमाण-तरङ्गे देवीपूजागृहनिर्माणम्, प्रतिमालक्षणम्, चण्डिकारूपकथनम्, चामुण्डारूपकथनम्, सर्वमङ्गलारूपकथनम्, प्रतिमाभ्यङ्गव्यवस्था, सामान्यार्घस्वरूपम्, जपहोमोपयोगिमन्त्रनिर्देशः, गन्धपुष्पाक्षतदान-विधिः, पूजोपचारः, देवीपूजने विहितपुष्पाणि, धूपदीपनैवेद्यदानविधिः, शारदीयदेवीमहोत्सवपूजाविधिः, आश्विनकृष्णनवम्यादिपूजाकल्पः, आश्विनशुक्लप्रतिपदादिपूजाकल्पः, प्रतिपदादिप्रतिदिनकृत्यम्, षष्ठ्यादि पूजाविधानम्, सप्तम्यादिपूजाविधानम्, तिथिनक्षत्रबलाबल-विचारः, तिथिद्वैधव्यवस्था, प्रतिपदि यजमानस्नापनाय शान्तिक-लशस्थापनविधिः स्वस्त्ययनविधिः, देवीमाहात्म्यश्रवणकीर्त्तनम्, द्वितीयादिरेवन्तादिपूजा, गजपूजनम् षष्ठ्यां बिल्वाभिमन्त्रणम्, सप्तम्यां पत्रिकाप्रवेशविधिः, महाष्टमीकृत्यम्, महाष्टमीमहानवम्यो-र्नवदुर्गार्चनविधिः, सर्वमङ्गलापूजाविधिः, उग्रदण्डापूजनम, दशभुजा-पूजनम्, चतुः षष्टिदेवीश्रीविग्रहवर्णनम्, महानवमीकृत्यविधिः, त्रिशू-लिनीपूजा, मातृचक्रार्चनम्, कुमारिकापूजा, बलिदान-विधानम् नीराजनम्, शालिहोत्रीयतुरगनीराजनविधिः, स्वातीसम्पातशान्तिः, यात्रामहोत्सवविधिरित्येतेषां विषयाणां समावेशो दृश्यते। अथ प्रयोगाख्ये द्वितीये तरङ्गे कलशस्थापनम्, कलशे ब्रह्मपूजा, प्रतिपदादि-प्रतिदिनं दुर्गापूजाविधिः अश्वशालायामश्वप्रवेशनविधिः, बिल्वे देवीबोधनामन्त्रणविधिः, पत्रिकाप्रवेशनविधिः, महाष्टम्यां देवीपूजा-विधिः देवीनामसङ्कीर्त्तनविधानम्, देवीदर्शनविधानम्, आवरणदेवता-पूजनविधिः मातृकापूजनविधिः अङ्गपूजाविधिः घृताभ्यङ्ग-विरूक्षणा-नन्तरं पञ्चगव्य पञ्चामृत-चन्दनवारि-सुरभिपुष्पतोय-स्नपनविधिः, अर्घसमर्पणविधिः अनुलेपनविधिः, पुष्प-बिल्वपत्रसमर्पणविधिः, विहित-विविध-पुष्पग्रथित-माल्यार्पणविधानम्, गुग्गुलु-कृष्णागुरुधूप-दानविधिः, दीपदानविधिः, आयसदीपवृक्षस्थ-दीप्तदीपराजिदानविधिः दीपसंघातदानविधिः। गुडखण्डाज्यसम्मिश्रान्न-गुडसाधित-घृतपक्वान्न-शालिभक्त - घृतशर्करासहितपायस - सखण्डघृतपक्वापूप - सखण्डघृत साधितमोदक - रम्भा - नारिकेलादिफल - केतकीकर्पूरवासितपानीय-सपूगताम्बूलप्रभृतिसम्भृतनैवेद्यसमर्पणविधिः, चित्रसूक्ष्मवसन-हेममुकुट-

कनकतिलक-कुण्डल-कण्ठाभरण-मुक्ताहाररत्नप्रालम्बिका-कङ्कणाङ्गुरीयक-केयूर-हेमकाञ्ची-नूपुरपादाङ्गुरीयकाद्यलङ्करणप्रदानविधिः, हेमपात्रदानविधिः घण्टा-वितान-चामर-कनकदण्डसङ्गतधवलच्छत्रदानविधिः नानावर्णविचित्र-मयूरपक्षव्यजनदानविधिः दूकूल-तूलवस्त्र-प्रच्छदपटसमन्वित-रत्नखचित-शय्यादानविधिः आसन-काष्ठपादुकोपानत्समर्पणविधिः, किङ्किणीजालसंवीत-श्वेतपताकोपशोभित-महाध्वजदानविधिः, दुर्गामण्डपनिवेशित-ध्वजमालादानविधिः, चतुर्हस्तदण्डमानपरिमित-भूमिदानविधिः, धान्यादिसस्यदानविधिः, आलक्तक-सिन्दूर-सुवर्ण-रत्नदानविधिः, छागादिपशुबलिदानविधिः, दुर्गादेव्याः शिरसा प्रणामस्य विधिः, दण्डवत्प्रणामविधिः, देवीस्तुतिविधिः, पुष्पाञ्जलित्रयसमर्पणविधिः, शस्त्रपूजाविधिः, चामर-च्छत्र-ध्वज-पताका-शङ्ख-सिंहासन-तुरग-पूजनविधिः, माषभक्तबलिदानविधिः, सामान्यबलिदानविधिः, अर्द्धयामिनीशेषकालिकदेवोपूजनविधिः, नृत्यगीतवादित्रपुरस्सररात्रिजागरणविधिः, महानवमीकृत्ये शूलाकृति-दुर्गापूजाविधिः, ततो महानवम्यां दुर्गापूजाविधिः, छागबलिदानविधिः, महिषबलिदानविधिः, मातृचक्रपूजनविधिः, मातृभ्यः समांस-माषभक्तबलिसमर्पणविधिः, ततः कुमारीपूजनविधिः, दुर्गामाहात्म्य-श्रवणविधिः, होमविधिः, ततो मन्दुरायां रेवन्तपूजाविधिः, ततो विजयदशम्यांदेवोविसर्जनम्, देवीश्रीविग्रहमुत्थाप्य तस्य नृत्यगीत-वादित्रपुरस्सरं जलप्रवाहणविधिः, ततः पूजास्थानमागत्य दक्षिणादान समनन्तरम् अपराजितापूजाविधिः, ततोऽस्त्रपूजानन्तरं खड्गहस्तेन प्रणवोच्चारणमुखरमुखेन यजमानेन अनुष्ठेयस्य प्रदक्षिणकृत्यस्यविधिः, अपराजितालताधारणविधिः, ब्राह्मणैः शान्तिकलशमुत्थाप्य तज्जलेन यजमानशिरसि अभिषेककृत्यं समन्त्रकं सम्पादनीयम् इत्यभिषेक विधिप्रतिपादनादयो विषयाः सोपस्कारं तत्तत्कृत्योचित-सङ्कल्प-वाक्यसमन्विताः समुपलभ्यन्ते। देवीस्तुतिसंवलितेनाधस्तनेन श्लोकेन सम निबन्धोऽयं समाप्तिमुपैति।

'कारुण्यैकवशम्वदा प्रणमतो बालानिव त्रायते
भीतिभ्यो घनपङ्कलिप्तवपुषः प्रक्षालयत्यम्बिका।
संसारे स्खलतः समुद्धरति या मोहान्धकारावृते
साव्याद्वः शरणागतार्त्तिशमनी देवी जगत्पावनी ॥"

ग्रन्थेऽस्मिन् प्रमाणरूपेण समुद्धृतेषु आकरग्रन्थेषु देवीपुराणम्, भविष्यपुराणम्, कालिकापुराणम्, ब्रह्मपुराणम्, विष्णुस्मृतिः, गौतमस्मृतिः, कृत्यरत्नाकरः, राजमार्त्तण्डः, पुणिसर्वस्वम्, देवलस्मृतिः, लिङ्गपुराणम्, गौडनिबन्धः, गर्गस्मृतिः, स्कन्दपुराणम्, शालिहोत्रम्, बृहत्संहिता, शिवरहस्यमित्यादीनामुल्लेखः समुपलभ्यते। सेयं महाकवि-विद्यापतिविरचिता दुर्गाभक्तितरङ्गिणी मिथिलादेशीयां पारम्पर्यक्रमागतां दुर्गापूजापद्धतिं पुराण-शास्त्रागमसिद्धान्तपुरस्सरं व्यवस्थापयन्ती स्थानकृतवैशिष्ट्येन समनुरञ्जिता सती वङ्गकामरूपजनपदनिवासिनामपि देवीभक्तिपरायणानां समादरपदं लेभे। तुलुष्काक्रमणकदर्थिते नैराश्यतमश्छन्ने हतोत्साहे भग्नमनोबले भारतीये जनमानसे दुष्टदानववृन्ददलनार्थं भुवमवतीर्णाया आदिशक्तिस्वरूपिण्याश्चण्डिकाया नानाविध-दिव्यास्त्रास्त्रधारिण्या जगज्जनन्याः सोपचार-महासम्भार-समाराधन-विधानप्रतिपादनमुखेन भारतीय-चेतनायां कापि विलक्षणा सुदूर-प्रसरणशीला परमोत्साहसमुच्छ्रया राष्ट्रोद्धार-वासना समुदयं प्रापितानेन निबन्धेनेति सतत्त्वदृशां विचारणायां प्रवर्त्तितायां निबन्धस्यास्य महनीयो महिमातिशयः प्रकामं प्राकाश्यमुपयाति। देवीश्रीविग्रहस्थापनपुरस्सरं श्रीदुर्गापूजनस्य प्रचुरविभव-सम्भारसाध्यतया मिथिलायां साम्प्रतं कलशस्थापनादिविसर्जनान्तः पूजाक्रमो निबन्धमिममनुसृत्यैव शारदीये नवरात्रोत्सवे श्रद्धाधनैः शाक्तैरनुष्ठीयमानो विलोक्यते। प्रसङ्गोऽयमत्रैव वर्त्तुलीक्रियते।

अतः परं महाकविप्रणीतेषु संस्कृतग्रन्थेषु व्याडीभक्तितरङ्गिणी, गयापत्तलकम्, वर्षकृत्यञ्चेति त्रयमुल्लेखनीयतामर्हति। तत्र प्रथमः संक्षिप्तकलेवरो ग्रन्थो मिथिलावङ्गजनपदनिवासिषु प्रसृत्वरीं विषहरा-पूजां विषयीकरोति। द्वितीयश्च गयायामनुष्ठेयं पितृसमुद्धारहेतुकं श्राद्धकृत्यं विवृणोति। तृतीयश्च वर्षमभिव्याप्य तत्तत्पर्वदिवसेषु समनुष्ठेयस्य कर्मकाण्डोदितकृत्यजातस्य विधानमुपवर्णयतीत्येतन्नाम्नैवावसीयते।

इत्थं सुस्पष्टमेव वयं पश्यामो यदसौ महाकविर्विद्यापतिः संस्कृत-शास्त्र-निष्ठं विषयजातं साक्षात्कृत्य युगोचितानां विषयविशेषाणां समाकलनपुरस्सरं वैदुष्यैकपक्षपातिसुधीवृन्दसमधिष्ठितस्य तदानीन्तन-

नस्य संस्कृतज्ञ - समाजस्योपयोगार्थं संस्कृतमवलम्ब्य निबन्धजातं विरचयामास यत्र स्थाने स्थाने कमनीय-काव्यकला-समाश्लेषसरसा एतदीया वैदग्धी स्फुटमेव प्रमाणपदवीमवतरति।

परन्तु महाकवेरस्य महाकवित्वनिबन्धना कीर्त्तिकौमुदी यौवनोदयादारभ्य संसारयात्राविरामपर्यन्तं विरचितानां मिथिला-भाषानिबद्धानां लालित्यैकनिधानभूतानां विविधरसभावसम्पत्स-मृद्धानां निरुपमकल्पना - समुल्लासविभास्वराणां सुधामधुराणां गीतानां माहात्म्यप्रकर्षादेव दिगन्तविसृत्वरीं शाश्वतीं स्थिति-मलभतेति सहृदयगोष्ठीगरिष्ठैः समनुमोदितं मतं चिराय प्रथिमान-मञ्चति। यत्सत्यमेतदीयेषु नानाजनपदनिवासि-परःसहस्रजन-समुद्गीयमानेषु विविधभावोल्लास-परिस्पन्द-सुन्दरेषु श्रवणसम-कालमेव स्वान्तानुप्रवेश-कौशल-वशाद् बलवदात्मानं भावावेश-वशम्वदं विदधत्सु गीतेषु लालित्य-सौकुमार्य-संभृत-मिथिलादेशीय-भाषा - नेपथ्य - परिशीलन - समुदितानाहार्य - मनोहर-रूप-माधुरी-चमत्कार - रुचिरायाः सरस्वत्याःश्रुति - सुभग - विपञ्चीस्वरग्राम-झङ्कृति-समलङ्कृता निरन्तर-विपरिवर्त्तमान-भावभूमिका-वैविध्य-विद्योतिनी दिव्यानुभावसम्भिन्ना लास्योल्लासमयी परममोहिनी मूर्त्तिपरम्परा निर्मलमुकुरोदर प्रख्यस्य पुष्करिणीसलिलस्य मन्दानिल-परामर्श-प्रभव-तनुतर - तरङ्ग-विलसितेषु विभासमाना शारदीय-राकाशशाङ्क - प्रतिबिम्बपरम्परेव प्रत्यस्तमिताशेष-वेद्यान्तरविषयां कामपि लोकोत्तीर्णां भावभूमिमुपनयति सचेतसां चेतांसीति विद्या-पतिगीततत्त्वविदामशेषाणां रसिकसत्तमानां मतस्थितिः।

महाकवेरस्य सुदीर्घकालावधिव्यापिन्यां गीतविरचनप्रक्रियायां प्रकाशान्धतमःकिर्मीरितस्य कविमानसस्य आरोहावरोहक्रमः सुस्पष्ट-मालोकयितुं शक्यते। कैशोरादारभ्य देहावसानपर्यन्तमनुभवपद-वीमुपयातस्य मधुराम्लमयस्य जागतिक-प्रपञ्चमभिव्याप्य विपरि-वर्त्तमानस्य घटनाचक्रस्य काप्यसंवरणीया प्रभावमुद्रा गीतेष्वेतदीयेषु शक्या साक्षात्कर्त्तुम्। मिथिलेश्वरस्य शिवसिंहस्य च्छत्रच्छायायां सुखासीनस्यास्य महाकवेः कविता काव्यकलोल्लासमयं परमानन्द-परिस्पन्द सुन्दरं विलासमयं जीवितं दधती पुरतोऽस्माकं प्रादुर्भवति।

कालेऽस्मिन् महाकविना गुम्फितेषु गीतेषु माधुर्यपराकाष्ठामुपारूढस्य मांसलस्य सम्भोगशृङ्गारस्य चित्तोन्मादनाधायी विलक्षणः कोऽपि परिपाकः समास्वादनीयतामुपयाति। गोपना-सर्वस्वमेव सौन्दर्य-रहस्यं शृङ्गारस्य। गुणवृत्ति-समुपस्कृतां भणितिरीतिमवलम्ब्य शक्यते वक्तुमित्थंयदियं विविधभावोद्रेकतरङ्गपरिमांसला शृङ्गार-रसस्रोतस्विनी लज्जोपजनितमवरोधमासाद्य सहृदयसम्वेद्येषु तेषु तेषु अपाङ्गविलोकित-साकूत-स्मितोद्भेद- कुट्टमितावहित्था-किलकिञ्चित-ललितविच्छित्ति-विभ्रम - विलासादिषु चेष्टाविशेषेषु देशकालपात्रौ-चितीपुरस्कारेण परिणतिमासादयन्ती लज्जाभूमिकामेवावलम्बतेऽप-ह्नवप्राणामनपह्नवनीयस्वरूपाम्। राधामाधवलीलासम्भृतेषु गीतेषु विविधभावोदयप्रभवानुभावोर्मिपरिस्पन्दमनोहरा वैयञ्जनिकप्रत्यय-समुपारूढा सेयं शृङ्गारतरङ्गिणी निर्भरं वहति यामवगाह्य समर्जन-रक्षणावेक्षण - प्रभृतिशतसहस्रचिन्ता - कीकसनिखातेन क्षणिकसुख-खद्योतिकावभासप्रायेण पार्थिवभोगजातेनानाचान्तात्मनां तृष्णा-पिशाचिकाविप्रलब्धानां मधुकण-लाभधिया मन्त्रमति अमधुमति च कुसुमस्तोमे चञ्चरीकाणामिवेतस्ततश्चञ्चूर्यमाणानां पार्यन्तिकविश्रा-मधामभूतं दिव्यप्रेमोपायनसारं रसराजस्यादिरसस्य किमपि स्वानुभ-वैकवेद्यं वीतविघ्नव्यूहं प्रकाशविभास्वरम् परमरमणीयं साक्षिभास्य स्वरूपं दिव्यतत्त्वं साक्षात्कुर्वाणाः केचन निरतिशयपुण्यभाजो धन्यतमा जीवितं कृतार्थतां नेतुं प्रभवन्ति। "रसो वै सः। रसं ह्येवायं लब्ध्वानन्दीभवति"—इत्येवमादिषु श्रुतिवाक्येषु यत्खलु रसतत्त्वं महर्षिभिरभिनन्दनीयतामुपनीतं विलोक्यते तदत्र गीतेषु प्रतिपदं दन्ध्वन्यमानं प्रविभासते।

परन्तु निरन्तरपरिवर्त्तनशीले संसृतिचक्रे किमपि स्थेमानं नाव-लम्बते। आत्मनो द्वितीय-जीवितभूते मिथिलेश्वरे शिवसिंहे समरा-ङ्गणमासाद्य दुर्वारतुलुष्काक्रमणप्रतिरोधव्यापृते नियतिनियोगादात्य-न्तिकीमदृश्यतामुपयाते शृङ्गारमाधुर्यालिङ्गिना महाकवेश्चित्तवृत्ति-रपि युञ्जानयोगिचित्तवृत्तिरिव नालभत स्थेयसीं स्थितिम्। महा-कविः सविषादमपश्यत्-तुलुष्कसैन्यानामतिप्रबलेनास्कन्दनेन भिद्यमान-प्राकारवलयम् अभ्रङ्कषं शैलसुदृढं दुर्गम्, समराङ्गणशय्यामाश्रित्य चिरनिद्रालीनं रथतुरगपदातिबहुलं प्रबलमपि दुर्दैवकदर्थितपौरुषं

स्वदेश - सैन्यसंघातम्, भिद्यमानसंस्थं सनातनधर्मभित्तिप्रतिष्ठितम् आचारप्रकारम्, प्रभ्रश्यमानं-भास्वरहेमदण्डमनाथ रत्नजालिकालङ्कृतं राजच्छत्रम्, मूकीभावमागतं तूर्यवादित्रघोषपुरस्कृतं जयनिनादम्, विप्रलुप्तदर्शनं मृदङ्गधीरध्वनिसमनुगतकङ्कणकाञ्चीनूपुरसिञ्जित-मधुरम् आरेचितभ्रूलतामनोहराङ्गहारपुरस्सरं राजनर्त्तकीवृन्देना-नुष्ठीयमानं लास्यमहोत्सवम्, प्रशममुपागतं सारभटीकम् मागधगण-समुद्गीयमानं - राजयशोगाथाचक्रम् कथाशेषतामुपयातं शक्रैश्वर्य-प्रतिस्पर्द्धिस्वराज्यवैभवमयं समयम्।

इत्थं दुर्दैवोपनतं दशाविपर्ययं दर्शं दर्शं महाकवेर्मनसि शनैः शनैः संसारासारभावना लब्धप्रसरा समजायत यद्वशादस्य चिरसहचरी काव्यकलामयी भारत्यपि परिशीलितकाषायवसना विप्रलम्भगाम्भीर्य-निमग्ना पश्चात्तापोच्छ्वासपर्याकुला भक्तिभावैकशरणा सती परवर्त्तिषु एतदीयेषु गीतेषु सचेतसां साम्मुख्यमभ्येति। यथा चोक्तं वेदव्यासेन—

यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा तथा विरागोऽत्र जायते नात्र संशयः॥

संसारेऽस्मिन् धर्मार्थकामलक्षणं त्रिवर्गभूतं वस्तु समासादयितुं प्रयत्नशतानुष्ठान-परिखिद्यमानो नक्तन्दिवं विलोक्यते लोकः। परन्तु त्रिवर्गोऽपि अर्जनरक्षणावेक्षणादिषूपायेषु समाश्रितेष्वपि पार्यन्ति-कवैरस्यपर्यवसन्नोऽनादिवासनोपनीतां तृष्णां शमयितुमलङ्कर्मीणतां नैव पुष्णाति, तस्यासारस्वभावत्वात्। यथायथा त्रिवर्गःसमाराध्यते तथा तथा तृष्णाविषवल्लरी शतशाखतां प्रतिपद्यत इति तत्सेवनं सर्वथा विपरीतायैव फलाय कल्पते। ततश्च सकलं सांसारिकं पदार्थजातमसारमेवेति धारणायामभिमानसं लब्धपदायां तत्त्वज्ञान-प्रभवा निर्वेदधीर्विवेकिनां मनोभूमिं समुद्भासयति येन पुनस्ते त्रिवर्गाराधनाद् विरक्ताः सन्तो मोक्षलक्षणं परमपुरुषार्थं परं निःश्रेयसकरं मन्वानास्तत्रैव सज्जन्ते। तदिदमुपदेशामृतं मोहान्धकार-पतितं दिङ्मूढं पृथग्जनकायमुद्दिधीर्षुणा निरतिशयकरुणापरिप्लुत-चेतसा तत्र भवता वेदव्यासेन यदत्र श्लोकवाक्येन वितीर्णं तत्खलु महाकवेर्विद्यापतेः परवर्त्तिनां गीतानां समास्वादनलभ्येन भावबोधेन समं सर्वथा संवदति। जीवनयात्राक्रमेण यथा यथा दिनान्तवेला

महाकवेः सन्निकर्षमासादयति तथा तथा प्राक्तनीमात्मनः संसारासक्तिं विचिन्तयतोऽस्य महाकवेर्मनः पश्चात्तापेन दन्दह्यमानं विलोक्यते। आराध्यदेवमुद्दिश्य समर्पितायाः भक्तिभावसम्भृतायाः स्वात्मसमुद्धार - प्रार्थनायाः दैन्यप्रतिध्वनिगभीरेण स्वरग्रामेण तरङ्गितं गीतजातं कालेऽस्मिन् महाकविना विरचितेषु गीतेषु प्राधान्यमासादयति।

अथ वर्षीयानसौ महाकविः जराजर्जरं शरीरभारमुद्वहन् भक्तिभावनालीनमतिरेकदा निशाशेषे भुवं विहाय गतं समप्राणं महाराजं शिवसिंहं मलिनवसनसंवीतं द्वात्रिंशन्मितवर्षानन्तरं स्वप्नोपनीतं विलोक्य देहावसानमात्मनः प्राप्तकालं विज्ञाय गङ्गायाः पावने सलिले तनुत्यागमीहमानः पतितोद्धारगृहीतव्रतां तापत्रयप्रशमिनीं पुण्यसलिलां तामुद्दिश्य परिवारपरिवृतः शिविकामारुह्य प्रयाणमकरोत्। ततः केषुचित् प्रयाणकेषु समतिक्रान्तेषु अनतिविप्रकृष्टदेशवर्त्तिन्याञ्च गङ्गायां साम्प्रतं कियद्दूरे जननी गङ्गेति महाकविना पृष्टे केवलं क्रोशद्वयपरिमिताध्वविप्रकृष्टा साध्विनेति परिजनैर्निवेदिते स्थापयत शिबिकामत्रैवेत्यादिश्य दुर्ललितो बाल इव हठभरवशम्वदमानसः सगद्गदं निजगाद एतावन्तं विप्रकृष्टमध्वानं समतिक्रम्य मातुः सकाशमहमभ्यागतः। माता पुनर्मादृशस्य दीनस्य सुतस्य समुद्धाराय क्रोशद्वयमितमध्वानमतिक्रम्य मदन्तिकं नागन्तुमुत्सहते किम्? महाकवेरादेशमादृत्य स्थापिता तत्रैव शिबिका। महाकविस्ततो निःसृत्य ध्यानमग्नः समजायत। पश्चिमाकाशमाक्रम्य समुदिते सन्ध्यारागे क्रमशो विगलिते वसुमतीमवतीर्णा कार्त्तिकधवलद्वादशीगगनाभोगं धवलयन्ती चन्द्रिका। शनैः शनैर्निशायां प्रभातकल्पायां सम्वृत्तायां वाति च मन्दं मन्दं प्राभातिके पवने प्रधानप्रवाहमार्गादीषद्वक्रिमबन्धुरां सरणिमवलम्ब्य क्रोशद्वयमितं विप्रकर्षमतिक्रामन्ती समुच्छूनसलिला तरङ्गभङ्गमुखरा ततः प्रवाहशीला समदृश्यत भगवती भागीरथी यतो महाकविरासीत् समासीनो ध्यानलीनः। सर्वे समवेताः परिजनाः साश्चर्यं ददृशुः – भक्तवात्सल्यवशम्वदाया गङ्गायाः पावनशैत्यमयं तापत्रयापहं सलिलाञ्चलमाश्रित्य सन्त्यक्तशरीरं महाकविं विद्यापतिम्। दृश्यमिदं सर्वथा अदृष्टपूर्वं विलोक्य अहो महाकवे-

गङ्गायां भक्तिः ! अहो भक्तवत्सला गङ्गा ! अहो महाकवेः पुण्यप्रकर्षः ! इत्येवं वचनोद्गारैः सर्वे परिजनाः महाकवेर्जयाशंसामुदीरयामासुः । घटनेयं ख्रीष्टाब्दस्य पञ्चदश्याः शताब्द्याः द्वितीयचरणस्यान्तिमं वर्षं संस्पृशति ।

स्थानमिदं पूर्वोत्तररेल - मार्गस्य सोनपुर-बरौनी - मार्गखण्डस्य अन्तरालवर्त्ति विद्यापतिनगरमित्याख्यं रेलयानविश्रामस्थानं निकषा वर्त्तते यत्र महाकवेश्चितायां निर्मितमेकं पुरातनं शिवमन्दिरं भूयो भूयः प्रतिसंस्कृतं सदद्यापि समवस्थितं तात्कालिकं - वृत्तान्तं संस्मारयति ।

महाकवेस्तिरोभावादद्यप्रभृति द्राघीयसी कालकला समतिक्रान्ता । तया सहैव चास्तमुपागमत् तदानीन्तनः संस्कारः, आचारप्रचारः, आस्तिक्यभावना, कर्मकाण्डोदोरिता धर्मकर्मानुष्ठानाभिरुचिः, भक्तिभावप्रवणा भगवद्भजनचेतना, मुखरीकृतदिगञ्चलः स्वाध्यायघोषः, देवपित्रतिथिसपर्याभिनिवेशः । किम्बहुना, कालकृतस्य विपर्ययस्य असंवरणीया मनःसंक्षोभजननी काचन सर्वाभिभाविनी प्रभावमुद्रा मानवजीवनस्य सृष्टिसौन्दर्यस्य च सकलमेव क्षेत्रं विसंष्टुलं विदधती प्रसारोन्मुखी विलोक्यते साम्प्रतम् ।

इत्थं चिरन्तनाचारभ्रंशजन्येन मनस्तापेन भृशं दूयमानमानसानां प्राचीनाचारपक्षपातिनाम् एकैवाद्यापि विलसति मारवोपवनकल्पा तापत्रय-निर्वापणपटीयसी सद्यः परमानन्दप्रदा महाकवेर्मधुस्यन्दिनी गीतसंहतिः, या खलु मिथिलायामद्यापि स्थूलस्थूलदीप्तसिन्दुरबिन्दुविभूषितगौरभालविभासिनीनां देश्यरागानुगतगानविचक्षणानां ग्रामनिवासिनीनां मैथिलसीमन्तिनीनां रक्तकण्ठेषु विराजमाना समुपलभ्यते । धन्यास्ता मैथिलमहिला याः खलु महाकविविद्यापतिसमर्पितां गीतरत्नावलीम् अपर्युषितप्रभोज्ज्वलाम् सादरं, सावेशं, सानुरागञ्च स्वकण्ठेषु अक्षयं निधिमिव धारयन्ति । धन्यतमाश्च ते सचेतसो ये पुनर्गीतानीमानि पारम्पर्यक्रमागतां गीतरीतिमनुसृत्य मैथिलपुरन्ध्रिभिः विवाहोत्सवेषु अथवा मङ्गलकृत्यानुष्ठानेषु, अथवा पर्वविशेषविधीयमानदेवसपर्यावसरेषु गीयमानानि समाकर्णयितुं लब्धावसराः सन्तः श्रोत्रशष्कुलीं पावयन्ति प्लावयन्ति च दिव्यमाधुर्यसम्भृतेन रसासारेणात्मानम् ।

किञ्चाद्यापि गङ्गातीरमाश्रित्य कल्पवासपरायणाः, व्रतनिरताः, प्रतिसायङ्कालं गङ्गातटे दीपसमर्पणाय समवेताः प्रभोज्ज्वलदीपविभास्वरपाणिपल्लवाः, विद्यापति - विरचितगङ्गास्तुतिगीतगानव्यापृताः, भक्तिभावनाविवासितमानसाः मैथिलाङ्गनाः सम्पश्यताम् अविलुप्तसनातनसंस्काराणां सचेतसामधिमानममुगायनीकुर्वन्ति निर्धूतरजस्तमस्कां प्रकाशानन्दमयीमलौकिकीं संवित्समदम् ।

अद्यापि मिथिलायां क्वचन ग्रामोपान्तवर्त्तिनि बिल्वाटवीसङ्कुलतडागतटावस्थिते शिवायतने भस्मोपरचितत्रिपुण्ड्रोद्भासिभालैः, रक्तचन्दनविहिततिलकैः, आनाभिलम्बिनीं रुद्राक्षमालां दधानैः डमरुनिनाद-व्यस्तहस्तैः गङ्गोदक-बिल्वपत्राक्षतचन्दनपुष्प-धूपदीपनैवेद्यसम्भृत-चाङ्गेरिकाहस्तैः मुखवाद्यमुखरमुखैः श्रद्धाघनैर्वृद्धजनैः समुद्गीयमानानि विद्यापतिविरचितात्मापराधक्षमापनस्तुतिगीतानि शक्यन्ते श्रोतुम् ।

तदेवं बाल्यकालादेव दृश्यानामीदृशानां भूयो भूयः साक्षात्कारेण विद्यापतिगीतेषु अनवबोधपूर्वमेव पुरा समुदिता जन्मान्तरीणं साहचर्यमिव प्रख्यापयन्ती दुर्निवारवेगं मनःसङ्कर्षणकौशलं कलयन्ती काचन आसक्तिः या खलु परस्तात् संस्काररूपेणात्मनि लब्धप्रतिष्ठा सती संसारयात्रोपयिकसामग्रीसङ्घटनाव्यापृतस्यापि मम मानसावकाशेऽवसरं लब्ध्वा तेषां-तेषां गीतानां ध्वनिबिम्बमयं स्वरूपं समुपस्थापयन्ती नाद्यापि विराममुपैति ।

पुस्तकागारेषु विद्यापतिगीतानाम् आङ्ग्लभाषायां वङ्गभाषायां हिन्दीभाषायाञ्चानूदितानां सङ्कलनात्मकानि संस्करणानि दर्शं दर्शमङ्कुरितया कालक्रमेण च विकसितया समीहया प्रणोदितेन संस्कृतभाषायां केषाञ्चन तदीयानां गीतानां भावसंवादरुचिरमनुवादमार्याजातिगुम्फितं विधाय विद्यापतिशतकमिदं प्रथमं स्वान्तः सुखाय विनिर्मितम्, अथ सुहृदामनुरोधवशम्वदेन तदद्य प्राकाश्यमुपनीतम् ।

अत्र प्रस्तुतं गीतानुवादमधिकृत्य किञ्चिन्निवेदयामः । देश्यभाषाविशेषेषु प्रयुक्तानां शब्दानां यावती वितता अर्थव्याप्तिर्विलसति, यावती चार्थसम्पत् प्रयोगप्रवाहदैर्घ्यप्रभवस्य शब्दविशेषावसेयस्य अर्थस्य अर्थान्तरसाहचर्यमहिम्ना समृद्धिमश्नुते सा भाषान्तरप्रयुक्तां

पदावलीमवलम्ब्य पुनरनूदिता सती स्वकीयसर्वस्वभूतम् अभिव्यक्ति-प्रकारम् पदोच्चयप्रतिपाद्यमर्थविशेषजातम् कविविवक्षितमथसार्थम्, देश्यकाव्यानुगत-सौभाग्यसाम्राज्यं च न तावद् यथायथामुद्दीपयितुं प्रभवति, मूलभाषाशब्दानां तत्सब्रह्मचारिभाषान्तरशब्दानाञ्च मध्ये विद्यमानस्य अर्थसमर्पणसामर्थ्यस्य तारतम्यरूषितत्वेन समव्याप्ति-विरहात्। किञ्च देश्यभाषाकाव्येषु तद्भवकोटिप्रविष्टानां विशुद्ध-देश्यकोटिनिविष्टानाञ्च तत्सर्वस्वायमानानां शब्दानां यादृशं विलसति बलवन्मनोहारि समाकर्षणकौशलम् तस्य खलु भाषान्तरीयेषु शब्देष्वाधानं सर्वथा मनोरथच्छायामेव पुष्णाति। देश्यभाषा-निबद्धेषु काव्येषु अभिव्यक्तिमुपगता भावसौन्दर्य-सम्पत्-लज्जालुकेव तृणवल्लरी—भाषान्तरीयपदस्पर्शस्य नितरामसहेति सुविदितमेव प्राकृतकाव्यमर्मज्ञानाम्।

यद्यप्येतदस्ति तथापि न खलु सर्वोलोकः सर्वामेव भाषां शिक्षितुं प्रभवतीति कृत्वा अनुवादद्वारेणापि यदि भाषान्तरीयसाहित्यस्य कश्चिदेकोऽप्यंशः परिचितिसरणिमुपनीयेत चेन्नूनमेव समृद्धतरो भवेदस्माकं ज्ञानमयो निधिः। अत एव साम्प्रतमवलोक्यते अनुवाद-मयं वाङ्मयमनुदिनं प्रवर्द्धमानम्। सर्वमिदं मनसि निधाय मिथिला-भाषामविजानतां संस्कृतविज्ञानां पुरतो महाकविना विद्यापतिना मिथिलाभाषामाश्रित्य विरचितेषु गीतेषु कानिचित् तदीयकाव्यशिल्प-प्रतिनिधिभूतानि गीतानि शतकेऽस्मिन् प्रस्तुतानि सन्ति। अत्र सङ्कलितानि संस्कृतानुवादमयानि गीतानि स्तुतिसमुल्लास-शृङ्गार-विलास-वैराग्यसमुच्छ्वास-समाख्येषु त्रिषु प्रकरणेषु विहितविन्या-सानि सन्ति। अवशिष्टञ्च हरगौरीसम्बद्धं गीतजातं परिशिष्ट-भागे निहितं द्रष्टुं शक्यते। मूलगीतानामन्तिमेषु भागेषु महाकविः सर्वत्रैव स्वनामोल्लेखपुरस्सरं गीतार्थसंवादिनीं स्वकीयामुक्तिम् उपदेशमुखेन विन्यस्यन् देश्यगीतेष्वनुसृतां भणितेतिव्यपदेशप्रथितां शैलीमवलम्बमानः समुपलभ्यते। अत्र महाकवेः प्रतिष्ठामक्षुण्णभावेन संरक्षितुकामेन मया अनूदितानां गीतानामप्यन्तिमेषु भागेषु प्रायः सर्वत्रैव भणितांशमप्यनुवादविषयतामुपनीतम् अवलोक्य महाकविना संस्कृतभाषायामेव पुरा गीतानीमानि गुम्फितानीति भ्रान्तिर्नो मनसि सचेतोभिर्नोपलालनीया। तथात्वे देश्यभाषानुरागप्रथितकीर्तिना

महाकविना समुदीरितेन अधस्तनेन प्रतिज्ञावाक्येन समं तद्विरोधस्य वज्रलेपायितत्वात् । तथा चोक्तं महाकविना—

सक्कय वाणी बुधजन भावइ,
पाउअ-रस को मम्म न पावइ ।
देसिल वयना सब जन मिट्ठा,
तें तइसन जम्पओं अवहट्टा ।।

अस्य संस्कृतच्छाया यथा—

संस्कृतं रोचते कामं विद्वद्भ्या ननु केवलम् ।
रसमर्म जनः सर्वः प्राकृतस्थं न विन्दति ।।
परं मिष्टतमा यस्माद् देश्यभाषा जनादृता ।
तामेवातः समालम्ब्य गीतजातं विरच्यते ।।

अत्र मूलभाषागीतांशैः समं तदीयसंस्कृतानुवादांशानां कानिचिदुदाहरणानि तदुभयतारतम्य-कुतूहलाक्रान्तचेतसां सचेतसां विनोदाय क्रमशोऽधस्तात् समुपन्यस्यन्ते । तथा हि—

(१)

वासर-रैनि सवासन सोभित ।
चरन, चन्द्रमणि चूडा ।।
नक्तन्दिवमाभाति त्वत्पदयुग्मं शवासने निहितम् ।
द्युतिमातनुते दिव्यां चूडारत्नं विधुः सततम् ।।

(२)

कजल रूप तुअ कालो कहिए
उजल रूप तुअ वानी ।
रवि-मण्डल परचण्डा कहिए
गंगा कहिए पानी ।।
कज्जलवर्णा काली भक्तैरभिधीयसे सतत्त्वज्ञैः ।
वाणी त्वमेव मातर्विद्योतितशुभ्ररूपाढ्या ।।
प्रखरकिरणदुर्दर्शन-रविमण्डलवासिनी प्रचण्डा त्वम् ।
पावनशीतलसलिला त्वमेव तापापहा गङ्गा ।।

(३)

आध चान आध सिंदुर सोभा ।
आध विरूप आध जग लोभा ॥
मूर्द्धन्यर्द्धे जटिले चन्द्रकलायाश्छविः परिस्फुरति ।
अर्द्धे खलु धम्मिल्लोद्भासिनि सिन्दूररेखाभा ।
अर्द्धं वपुर्विरूपं महतीं भीतिं तनोति लोकयताम् ।
हृदयावर्जकमर्द्धं निखिलस्यैतस्य विश्वस्य ॥

(४)

माधव ! कत तोर करब बड़ाई ।
उपमा तोहर कहब ककरा सों कहितहुं अधिक लजाई ॥
स्तौमि कियत् खलु माधव ! माहात्म्यं ते विलक्षणं नितराम् ।
वक्तव्या तव केनोपमा ? त्रपोदेति तद्वचनात् ॥

(५)

खन गोकुल भए चराइअ गाय ।
खन भिखि माँगिए डमरू बजाय ॥
गोकुलमवतीर्णस्त्वं कुरुषे गोचारणं मुदा विपिने ।
डमरुनिनादं कुर्वन् भैक्ष्यपरस्त्वं पुनर्भ्रमसि ॥

(६)

एक अपराध छमब मोर जानी ।
परसल माय पाय तुअ पानी ।
क्षन्तव्यः खल्वेको ममापराधस्त्वया कृपापरया ।
मातस्तेऽतिपवित्रं स्पृष्टं पद्भ्यां मया सलिलम् ॥

(७)

जमुनाक तोर उपवन उदवेगल
फिरि फिरि ततहि निहारि ।
गोरस बेचए अबइत जाइत
जनि जनि पुछ बनमारि ॥

कालिन्दीतटभूमौ नितरामपुद्वेगनिघ्नहृदयोऽसौ ।
तव सन्दर्शनकामः कुञ्जे कुञ्जे परिभ्रमति ।।
गोरस - विक्रयकामा गोपवधूटीर्गतागतव्यग्राः ।
समधिकमुत्सुकमनसा पृच्छति भूयस्तवोदन्तम् ।।

( ८ )

मुख मनोहर अधर रंगे ।
फूललि मधुरी कमल संगे ।।
वदनं सरसिजमधुरं शोणाधरसङ्गतं परं भाति ।
स्फुटमाभाति विकसितं बन्धूकेनान्वितं पद्मम् ।।

( ९ )

जोरि भुज जुग मोरि बेढल ततहि वदन सुछन्द ।
दाम चम्पक काम पूजल जइसे सारद चन्द ।।
व्यत्यस्य बाहुयुगलं पिहितं वदन तया कराङ्गलिभिः ।।
चम्पकदाम्ना मन्ये कामेनाभ्यर्चितः शरच्चन्द्रः ।।

( १० )

तितल वसन तनु लागू ।
मुनिहुक मानस मनमथ जागू ।।
सद्यः स्नाता तरुणी दधती वसनं शरीर-संसक्तम् ।
कामं जनयति कामं मनसि मुनीनामपि प्रसभम् ।।

( ११ )

सजल चीर रह पयोधर सीमा ।
कनक बेल जनि पड़ि गेल हीमा ।।
सघनस्तनयुगसीम्नि श्लिष्टं वसनं विभाति तन्वङ्ग्याः ।
कनक-श्रीफलयुगलं मन्ये जातं हिमच्छन्नम् ।।

( १२ )

रसमति मालति भल अवसर रे।
पिबओ मधुर मधु भूषल भमर रे॥
त्वं सरसा मधुमधुरा भासि यथा मालती भाति।
चिरतृष्णाकुलचित्तो भृङ्गो लभतां रसास्वादम्॥

( १३ )

हम न जाएब तुअ पासे।
जाएब औघट घाटे॥
नहि यास्यामि कथञ्चन तवात्र पार्श्वं यतोऽसि चपलस्त्वम्।
यास्याम्यतोऽतिदूरं यमुनातीरं जनैः शून्यम्।

( १४ )

सङ्गक सखि अगुआइलि हे हम एकसरि नारी।
दामिनि आय तुलाइलि हे एक राति अँधारी॥
मम सङ्गिन्यः सख्यश्चलिता ह्यग्रेऽहमेकिका युवती।
चञ्चति चपला गगने रजनी चेयं तमश्छन्ना॥

१५ )

जूड़ि रयनि चकमक करु चाननि एहन समय नहि आन।
एहि अवसर पहु मिलन जेहन सुख जकरहिं हो से जान।
स्निग्धा रजनी ज्योत्स्ना चञ्चति समयो मनोहरोऽतितराम्।
सम्प्रति सङ्गमसौख्यं सङ्गम - लाभैक-संवेद्यम्॥

( १६ )

ना जानू किए करु मोहन चोर।
हेरइत प्राण हरि लेइ गेल मोर॥
नहि जाने किं कृतमिति मोहनचौरेण नर्मचतुरेण।
पश्यन्नेवायं मामहरन्मे जीवितं नूनम्॥

( १७ )

सुन सुन सुन्दर मधाई। तोहे सोंपल धनि राई।
कमलिनि कोमल कलेवर। तुहुँ से भूखल मधुकर॥
शृणु शृणु सुन्दर माधव! राधा तुभ्यं समर्पिता कान्ता।
सा सरसिजमृदुगात्री त्वं खलु मधुपः क्षुधाविष्टः॥

( १८ )

सुन सुन नागर निविबन्ध छोर।
गाँठिते नाहि सुरत धन मोर।
शृणु शृणु नागर! वचनं नीवीबन्धं कुतः परामृशसि।
नहि मम नीवीग्रन्थौ सुरतधनं वर्त्तते गूढम्॥

( १९ )

दुहु दुहु हेरि मुख हृदय बाढए सुख बोलत भूलत पाँति।
पारस्परिकमुखद्युतिदर्शनमग्नस्य रम्ययुगलस्य।
प्रस्थानोचितवचनं मध्येवदनं परिस्खलति।

( २० )

पहु सँग कामिनि बहुत सोहागिनि
चाँद निकट जइसे तारा।
प्रियतमसविधे नित्यं विहरन्ती भाति कामिनी कामम्।
चन्द्रसमीपमुपेता भाति यथा भास्वती तारा॥

( २१ )

जनम जनम हरगौरि अराधलों सिव भेल संकति विभोर।
जन्मनि जन्मनि हे सखि हरगौरी पूजनं मया चरितम्।
किन्तु शिवः खलु लब्धः शक्तिसमाश्लेषनिर्मग्नः॥

( २२ )

हरि धरु हार चओंकि पडु राधा।
आध माधव कर गिम रहु आधा।
हरिणा कलितो हारो जाता राधा चमत्कृता सद्यः।
अर्द्धं माधवपाणौ राधाकण्ठे व्यभाच्च तस्यार्द्धम्॥

( २३ )

हे सखि हमर दुखक नहि ओर।
ई भर बादर माह भादर सून मन्दिर मोर।।
दुःखमहार्णवपारं सखि ! नहि पश्यामि दुःसहोद्वेगा।
नवघनमेदुर - भाद्रे प्रियहीनं मे गृहं शून्यम् ।।

( २४ )

आसक लता लगाओल सजनी नजनक नीर पटाय।
से फल अब तरुनत भेल सजनी आँचर तर न समाय ।।
आशालता मयोप्ता हृदये नयनाम्बुधारया सिक्त्वा।
फलमस्याः परिपुष्टं सम्प्रति नैवाञ्चले माति ।।

( २५ )

विहरइ नवलकिसोर।
कालिंदि-पुलिन कुंज वन सोभन
नव नव प्रेम विभोर ।।
तपनतनूजापुलिने रम्यनिकुञ्जोल्लसद्वनाभोगे।
प्रेमावेशाविष्टो विहरति नव्यो युवा कृष्ण ।।

( २६ )

माधव ! बहुत मिनति कर तोय।
दय तुलसी-तिल देह समर्पिनु दया जनि छाड़ब मोय ।।
विनतिपुरस्सरमेषा हे माधव ! मेऽस्ति याचनामीक्षणम् ।
स्वीकुरु मम तिलतुलसीसहितं दत्तं वपुस्तुभ्यम् ।।

(२७)

बेढ़ भासल माझ धारे।
भैरव ! धरु करुआरे ।।
मध्येधारं नौका प्रवाहवेगेन नीयते दूरम्।
भैरव ! तूर्णमरित्रं गृहाण वेलातिवर्तते त्रातुम् ।।

(२८)

आजु नाथ एक व्रत महासुख लागत हे ।
तोहे सिव धरु नटवेस कि डमरु ब्रजाबहु हे ॥

अद्य ममैकं प्रणयं पूरय नाथ प्रमोदमेष्यामि ।
अङ्गीकुरु नटवेषं डमरुनिनादो नभः स्पृशतु ॥

(२९)

सिमटु सिमटु निअ लोचन नीर ।
ककरहु काल न राखथि थीर ॥

लोचनसलिलमपाकुरु मा कुरु शोकं नियच्छ हृदि धैर्यम् ।
स्थिरमिह कमपि न कुरुते क्रूरः सर्वङ्कषः कालः ॥

इत्थं विविधेभ्यः प्रसङ्गेभ्यः समुद्धृतानां पद्यानां निदर्शनान्युपसंहरन् स्वकीयामधस्तनीं विज्ञापनां प्रति सचेतोभिरवधानं दीयमानमिच्छामि । यथा—

सौष्ठवमत्र विदग्धैः साक्षात्क्रियते यदस्ति सुकवेस्तत् ।
यच्चासौष्ठवज्जातं तदस्मदीयं न तत् तस्य ॥

किञ्च प्रमादरहितं मानुष्यकं सुदुर्लभमिति मत्वा मदीयमतिमान्द्यजातं मुद्रणदोषसंसृष्टञ्च विच्युतिनिचयं कृपया संशोध्य शतकमिदं दृष्टिपातेन समनुगृह्णन्तु सौजन्यवशम्वदहृदयाः सहृदया इति भूयो भूयः सादरं प्रार्थये ।

महाकविविद्यापतिविरचितानां गीतानामध्ययनकर्मणि विद्यापतिवाङ्मयनिष्णातेन श्रीयुतखगेन्द्रनाथमित्रमहाशयेन श्रीयुतविमानविहारीमजुमदारमहाशयेन च सम्भूय सम्पादितेन विद्यापतिसमाख्यासुप्रसिद्धेन ग्रन्थरत्नेन प्रभूतं ममोपकृतमिति विद्वद्युग्मं प्रति श्रद्धापुरस्सरं विनयावनतेन शिरसा स्वकीयमाधमर्ण्यं निवेदयामि ।

शतकमिदं प्रकाशयितुं स्नातकोत्तरसंस्कृतविभागप्रवाचकेन डा० श्रीरामगुलामशर्मणा विभागीयकार्यालयसहायकेन श्रीश्रीनाथशर्मणा च सानुरोधं प्रणोदितो जानकीप्रकाशनसंस्थाधिकृतः श्रीनन्दकिशोर-सिंहमहाशयः सहर्षमुद्यतः सञ्जात इति सर्वेभ्योऽप्येभ्यः कल्याण-मित्रेभ्यो धन्यवादराशिं वितरन् विरमामि ।

स्थानम्—पाटलिपुत्रम्
तिथिः —अक्षयतृतीया
विक्रमाब्दः—2049

नम्रनिवेदकः
मिश्रोपाह्वः श्रीकाशिनाथशर्मा
B-2/1, प्रोफेसर्स कालोनी,
सैदपुर, पटना-16



## अनूदित-पद्यप्रथमचरणानुक्रमणी पृष्ठांकाः

—:o:—

चतुराननसदने त्वं ब्रह्माणीरूपविश्रुता भासि ।
हरगेहे त्वं गौरी कनक-सुगौरी सदा जयसि ॥ ५ ॥
नारायणभवने त्वं कमला कमलासना कम्रा ।
हरिवक्षः—स्थलशयना पङ्कजनयना जगद्वन्द्या ॥ ६ ॥
कविवरविद्यापतिना देवीमाहात्म्यगीतमभिगीतम् ।
कः खलु वेत्ति निगूढं प्रभवं तस्या जगन्मातुः ॥ ७ ॥

३

मेरुमहीधरशिखरे चञ्चच्चामीकरच्छविच्छुरिते ।
ज्योत्स्नासुन्दरहसिते जयसि त्वं देवि निवसन्ती ॥ १ ॥
सुमधुरहसितविनिर्यद्दशनद्युतिसम्पदो महामाये ।
तुलनासरणिं विमला नवचन्द्रकला समभ्येति ॥ २ ॥
क्रोधान्धोद्धुरसुररिपु-सङ्ख्यातीतोन्मदानि सैन्यानि ।
भीमान्याहवभूमौ महसा विनिपातितान्याशु ॥ ३ ॥
चतुराननलब्धवरो महिषो शुम्भस्तथा निशुम्भोऽपि ।
देवि ! त्वया विनाशं नीतः सर्वः सुरारातिः ॥ ४ ॥
दनुजकुलं यमसादनमाञ्जस्येनोपनीय निश्शेषम् ।
दुर्जयदानवभीता भक्तास्त्रातास्त्वया मातः ॥ ५ ॥
दुस्तरदुरितोत्तारिणि दुर्दमदैत्यप्रमर्दनप्रथिते ।
नम्र-सुरासुर-सेवित-शङ्कर-कल्याणदे ! जयसि ॥ ६ ॥
शङ्खचक्रशितसायक—परशुकृपाणायुधोल्लसिता ।
पारणरभसाकृष्टा दनुजासृक्पिशितपिण्डैस्त्वम् ॥ ७ ॥
सिंहस्कन्धारुढा भैरविसार्थानुगा चरस्याजौ ।
निजकरकृत्तैर्दानवमुण्डैर्ग्रथितां स्रजं दधती ॥ ८ ॥
रमसे संसृतिबन्धनहारिणि सूर्येन्दुवह्निनेत्रोग्रे ।
गीतानुगतैर्नृत्यैः रणरङ्गे योगिनीनां त्वम् ॥ ९ ॥
जगतः सर्गे भरणे संहारे व्यापृता सदा रमसे ।
ब्रह्मश्रीशमहेशोत्तंसैर्लालित-पदाम्भोजा ॥ १० ॥
विद्यापतिना विहिता स्तुतिरेषाशेषपाप्मनां शमनी ।
शिवसिंहस्य निदेशादखिलाशापूरणप्रवणा ॥ ११ ॥

४

जय जय शङ्कर भगवंस्त्रिपुरारे भक्तशर्मद स्थाणो।
भाति तनोरर्द्धांशे पुम्भावस्तेऽपरत्र दम्भावः ॥ १ ॥
वपुषोऽर्द्धं ते भस्मोद्धूलनधावल्यशोभयानुगतम्।
निरुपमगौरिममधुरं विलसत्यर्द्धं परं रम्यम् ॥ २ ॥
वक्षस्ते हे नाथ! प्रविभात्येकत्र पौरुषानुगुणम्।
चञ्चत्यपरत्रेदं कुचभर - शोभा - समुद्वेलम् ॥ ३ ॥
माला तेऽतिविचित्रा निचितार्द्धं मुण्डमण्डलैर्भीष्मैः।
अर्द्धं खलु पुनरस्या गजमुक्तामञ्जुलं भाति ॥ ४ ॥
अर्द्धं भसितच्छुरितं वपुरर्द्धं भाति चन्दनैर्लिप्तम्।
विस्मृतिलीनार्द्धा मतिरपरार्द्धा चेतनोल्लसिता ॥ ५ ॥
अर्द्धं मौञ्जीमात्रं वसनं रूक्षं विभर्षि निजदेहे।
मसृणं कौशेयाम्वरमर्द्धं धत्से परं रुचिरम् ॥ ६ ॥
योगाभ्यासनिमग्नं देहार्द्धं ते विभाति निस्पन्दम्।
अपरमुदञ्चल्लास्य-प्रविलास-स्पन्द-सम्भिन्नम् ॥ ७ ॥
मूर्द्धन्यर्द्धे जटिले चन्द्रकलायाश्छविः परिस्फुरति।
अर्द्धे खलु धम्मिल्लोद्भासिनि सिन्दूररेखाभा ॥ ८ ॥
अर्द्धं वपुर्विरूपं महतीं भीतिं तनोति लोकयताम्।
हृदयावर्जकमर्द्धं निखिलस्यैतस्य विश्वस्य ॥ ९ ॥
कविरत्नं विद्यायतिरभिधत्ते वेत्ति केवलं धाता।
एकप्राणमयोऽयं स्पन्दो द्वेधा विभक्तोऽस्ति ॥ १० ॥

५

स्तौमि कियत्खलु माधव! माहात्म्यं ते विलक्षणं नितराम्।
वक्तव्या तव केनोपमा त्रपोदेति तद्वचनात् ॥१॥
श्रीखण्डं यदि दुर्लभलोकम्पृणसौरभं मनोहारि।
किन्तु तदस्त्यतिकठिनस्पर्शं काष्ठं न तुल्यन्ते ॥२॥
असृतमयैरिह किरणैर्भुवनमुदं यस्तनोति शीतांशुः।
सोऽपि प्रभया पक्षं केवलमेकं चमत्कुरुते ॥३॥

रमणीयोऽतिमहार्घो मणिरथ चञ्चत्प्रभोद्धुरो भाति ।
सोऽपि शिलामयरूपस्त्वत्साम्यं नैव पुष्णाति ॥४॥
विकिरति काञ्चनकदली कम्रां कान्ति न चात्र सन्देहः ।
सापि त्रपापरीता खर्वा पुरतस्तवाभाति ॥५॥
त्वमिव त्वं हे माधव ! चेतस्यनुमा ममोदयं लभते ।
विद्यापतिकविराह स्नेहः सद्भिर्दुरापोऽस्ति ॥६॥

●

६

एकस्त्वं खलु भगवन् ! हरिहर—नेपथ्य—भेदमात्रेण ।
भासि द्विधा विभिन्नो लीलारसिकः स्वतन्त्रेच्छः ॥१॥
त्वमिह कदाचिद् वसनं परिधत्से दीप्त-पीतिमोल्लसितम् ।
अपरस्मिन् खलु काले धत्से व्याघ्राजिनं परुषम् ॥२॥
पञ्चाननतां काले स्वीकुरुषे त्वं यदृच्छया देव !
पुनरन्यस्मिन् समये चतुर्भुजो भासि विष्णुस्त्वम् ॥३॥
गोकुलमवतीर्णस्त्वं कुरुषे गोचारणं मुदा विपिने ।
डमरुनिनादं कुर्वन् भैक्ष्यपरस्त्वं पुनर्भ्रमसि ॥४॥
बर्हापीडः कृष्णस्तनुषे वृन्दावने महारासम् ।
भस्मोद्धूलितमूर्त्तिस्त्वमेव काले पुरारातिः ॥५॥
एकन्तेऽस्ति शरीरं वसतिस्थानं तथापि ते द्वितयम् ।
वैकुण्ठेऽसि कदाचित् कैलासे चान्यदा भवसि ॥६॥
भणति कविर्विद्यापतिरेषा वाणी तु भाति विपरीता ।
यो नारायणरूपः स एव शूली मतो देवः ॥७॥

●

७

ब्रह्मकमण्डलुभवने निवससि नित्यं प्रमोदपरिपूर्णा ।
सागर-नागर-सदनस्यैका त्वं राजसे गृहिणी ॥१॥
पातकमहिषविदारणहेतोश्चञ्चत्प्रभाभरं तरलम् ।
लहरीचयकरवालव्यूहं नित्यं बिभर्षि त्वम् ॥२॥

सुरमुनिमनुज-समर्पित-सौरभसम्भार-सम्भृतैः कुसुमैः ।
किर्मीरितमवभान्ति प्रत्यहमेतानि पुलिनानि ॥३॥
शशिशेखर-कृतवन्दचर्या-संसक्तभस्म-विच्छुरितम् ।
विमलं तावकपुलिनं विराजते भूषितं परितः ॥४॥
हरिपदकमलविगलितं मधुमधुरं वारि तावकं मातः ।
पुण्यं द्रवतापन्नं स्वर्गपुरीपावनं जयति ॥५॥
पुण्यमये तव सलिले सकृदपि भवत्याचरन्ति ये स्नानम् ।
वितरसि तेभ्यः सुरपुरममितविलासं जनेभ्यस्त्वम् ॥६॥
भाति तवान्तःकरणे पापसमुद्धारवासना सहजा ।
अवगाहनपूतानां हरसि त्वं मारकीं भीतिम् ॥७॥

●

८

निरतिशयं सुखसारं तव तीरे मातरद्य सम्प्राप्तम् ।
सन्त्यजतः सामीप्यं ममाद्य बाष्पाकुला दृष्टिः ॥१॥
विमलविलोलतरङ्गे गङ्गे बद्धाञ्जलिर्विनम्रोऽहम् ।
भूयोदर्शनसौख्यं मातः सम्प्रार्थयेऽभीष्टम् ॥२॥
क्षन्तव्यः खल्वेको ममापराधस्त्वया कृपापरया ।
मातस्तेऽतिपवित्रं स्पृष्टं पद्भ्यां मया सलिलम् ॥३॥
किं कार्यं बत तपसा जपेन योगादिनाथवा बहुना ।
स्नानेनैव हि सकृदपि कृतार्थतामेति जन्मेदम् ॥४॥
भणति कविर्विद्यापतिरस्ति ममैकं निवेदनं परमम् ।
विस्मर्त्तव्यो नाहं जीवितविगमे समायाते ॥५॥

●

## ९

विकसितकदम्बपादपमूले नन्दस्य नन्दनः स्थित्वा ।
मन्दं मन्दं मुरलीं वादयति त्वां समुद्दिश्य ॥ १ ॥
सङ्गमवेला याभूत् पूर्वं सङ्केतितागता सेति ।
वंशीध्वनिविन्यासैः शृणु सखि ! सर्वं स सूचयति ॥ २ ॥
मुरलीरवसङ्केतितमनुपलमेति श्रुतिं वचस्तस्य ।
अनिलोल्लासितमधुना राधे ! राधे ! विलम्ब्यालम् ॥ ३ ॥
कामयतेऽसौ सङ्गममनिशं ते नन्दनन्दनो दीनः ।
यात्यनिशं वैधुर्यं धैर्यं धीरस्य तस्यापि ॥ ४ ॥
कालिन्दीतटभूमौ नितरामुद्वेगनिघ्नहृदयोऽसौ ।
तव सन्दर्शनकामः कुञ्जे कुञ्जे परिभ्रमति ॥ ५ ॥
गोरसविक्रयकामा गोपवधूटीर्गतागतव्यग्राः ।
समधिकमुत्सुकमनसा पृच्छति भूयस्तवोदन्तम् ॥ ६ ॥
रसिका नितरामहमित्यवहेला नैव माधवे कार्या ।
सुतरां रसिकशिरोमणिरेषोऽपि न हीयते त्वत्तः ॥ ७ ॥
विद्यापतिरभिधत्ते मानिनि राधे ! शृणुष्व मद्वचनम् ।
सत्वरमभिसर कृष्णं कृतमतिमात्रं विलम्बेन ॥ ८ ॥

## १०

लोलानिल-संस्पर्शाद् व्रसनं सुतनोस्तनोः परिस्रस्तम् ।
लोचन-सरणिमुपेता यौवनरम्या वपुश्शोभा ॥ १ ॥
समदृश्यत सा गौरी नीलक्षौमावभासिरुचिराङ्गी ।
नूतनजलधरमध्ये तडिदिव दधती परां दीप्तिम् ॥ २ ॥
सविलासं गच्छन्ती यौवनभरमन्दपादविक्षेपा ।
हेमलतेवालोक्यत भुवि विचरन्ती निरालम्बम् ॥ ३ ॥
समलक्ष्यत खलु तस्याः प्रोद्यद्वक्षोजपङ्कजद्वन्द्वम् ।
अविकसितं ननु मन्ये सामीप्याद् वदनचन्द्रस्य ॥ ४ ॥
विद्यापतिरभिधत्ते रसिकः खल्वेव वेत्ति रससौख्यम् ।
देवसिंहभूपालो मिथिलेशो ह्रासिनीकान्तः ॥ ५ ॥

## ११

अद्य विलोचनसरणिं सम्प्राप्ता दीप्तयौवनाभरणा ।
संहृतपीनपयोधररम्यवपुः सा वरारोहा ॥ १ ॥
त्वं खलु माधव ! निरुपमसौभाग्यस्यासि भाजनं नूनम् ।
येनेयं मम जाता दृष्टिपथं सर्वथापूर्वा ॥ २ ॥
तद्वपुषः सौन्दर्यं वच्मि किमप्यद्भुतं यथाशक्यम् ।
मन्येऽहं कनकाद्रौ सञ्जाता वल्लरी दिव्या ॥ ३ ॥
वदनं सरसिजमधुरं शोणाधरसङ्गतं परं भाति ।
स्फुटमाभाति विकसितं बन्धूकेनान्वितं पद्मम् ॥ ४ ॥
पक्ष्मललोचनयुगलं कज्जलकलया विभूषितं तस्याः ।
पुष्परसासवमत्तं भृङ्गद्वितयं परं मन्ये ॥ ५ ॥
भ्रूयुगलस्य हि शोभा प्रष्टव्या नैव कीदृशी सेति ।
कामेनैव हि सज्जीकृतमञ्जनकार्मुकं चित्रम् ॥ ६ ॥
श्रुत्वैतावन्मात्रं दूतीवचनं मनोहरं कृष्णः ।
तामुद्दिश्य त्वरितं चलितः कामं स्पृहाविष्टः ॥ ७ ॥

## १२

सस्मितवलितमुखं सा मामवलोक्यार्द्धनेत्रपातेन ।
कान्ता दूरमुपेता प्रसभं हृत्वा मम स्वान्तम् ॥ १ ॥
मूर्त्तिमती सा माया पञ्चेषोरिन्द्रजालकुशलस्य ।
कलयति ननु वरयुवतिर्मोहनमन्त्रं जगज्जैत्रम् ॥ २ ॥
व्यत्यस्य बाहुयुगलं पिहितं वदनं तया कराङ्गुलिभिः ।
चम्पकदाम्ना मन्ये कामेनाभ्यर्चितश्चन्द्रः ॥ ३ ॥
वसनान्तेन पयोधरयुग्मं संवृत्य कौतुकाविष्टा ।
पुनरुत्क्षिप्य पटान्तं पश्यति रहसि स्तनार्धं सा ॥ ४ ॥
नूनं कलयति लक्ष्मीमुज्ज्वलतपनीयशैलशिखरस्य ।
पवनविधूतशरद्घन-मध्योदित-रम्यरूपस्य ॥ ५ ॥
नयनसरणिमुपगच्छेद् यदि सा भूयः सुवर्णरुचिराङ्गी ।
मनसिज-खर-शर-विद्धं लभेत चेतस्तदा तृप्तिम् ॥ ६ ॥

चरणसरोरुहयुग्मं लाक्षारागानुरञ्जितं तस्याः।
तनुते सम्प्रति तापं मनसि निखातं मनोजेन॥ ७॥
विद्यापतिरभिधत्ते दूरीकुरु कृष्ण! चित्तचाञ्चल्यम्।
अगणित-गुणमणि-रुचिरां पुनरपि तां लप्स्यसे नूनम्॥ ८॥

## १३

आहृत्य चन्द्रसारं स्निग्धालोकं मनोहरं गौरम्।
निर्मितमाननमस्याश्चकोरलोलं च नेत्रान्तम्॥ १॥
अमृतद्युतिपरिलसितं वदनं सम्प्रोञ्छ्य चन्द्रवदनेयम्।
आर्द्राञ्चल—विक्षेपादतनोज्ज्योत्स्नारुचिं दिक्षु॥ २॥
केन विधात्रा रचिता रमणीयं नव्ययौवनाभरणा।
रूपं वचनातीतं लोचनसन्तर्पणं दधती॥ ३॥
पीनोत्तुङ्गघनस्तनभारं सहतां कथं नु तनुमध्या।
मन्येऽत एव कामस्त्रिवलीबद्धं व्यधात्मध्यम्॥ ४॥
नाभिविवरनिष्क्रान्ता रोमलता कालसर्पिणी भाति।
पातुं सुरभिमुखानिलमत्यौत्सुक्यात् प्रसर्पन्ती॥ ५॥
अस्या नासावंशं मत्वा तार्क्ष्यस्य चञ्चुमत्युग्रम्।
कुचकाञ्चनगिरिसन्धौ भीतेवाभाति सा लीना॥ ६॥
पञ्चेषुस्त्रिभिरिषुभिर्जित्वा भुवनत्रयं महोत्साहात्।
शिष्टं वाणद्वितयं तव दृग्युग्मे न्यधात् तीक्ष्णम्॥ ७॥
हन्त निदारुणमनसा विधिनानुदिनं निहन्यते कामम्।
रसिकसमाजोऽशरणः कुटिलैरस्याः कटाक्षसम्पातैः॥ ८॥
भणति कविर्विद्यापतिरेवंरूपा मनोहरा कान्ता।
निरुपमपुण्यमहिम्ना लभ्या धन्येन केनापि॥ ९॥

## १४

अद्य मया पथि दृष्टा यत्नातिशयेन वेधसा रचिता।
कनकलतेव सुगौरी गच्छन्ती हृदयहारिणी रामा॥१॥
चपलसमीरणविधुतं वसनं सुतनोस्तनोः परिस्रस्तम्।
नयनातिथितां प्रापन्नवयौवनमञ्जुला कान्तिः॥२॥

नवजलसम्भृत-मेदुरवारिद-पटलीनिलीनतनुदीप्तिः ।
विलसति मन्ये सहसा रुचिरा विद्युत्प्रभा तरला ॥३॥
वामालोक्य नताङ्गीं रमणीं रमणीय-रुपाढ्याम् ।
परमानन्दपयोधौ मग्नं मम मानसं नितराम् ॥४॥
गमनं तस्या ललितं लोचनलोभावहं मया दृष्टम् ।
हेमलता भुवि विचरत्यवलम्बन-वर्जिता मन्ये ॥५॥
तत्राप्यपूर्वदृष्टं दृष्टं वक्षोजपङ्कज-द्वन्द्वम् ।
अपरिस्फुटितं शङ्के सामीप्याद्वदन-चन्द्रस्य ॥६॥
सुश्लिष्टं वपुरभितो नीलं वसनं सुसंहृताश्चिकुराः ।
रसलम्पट-मधुपावलि-सक्तेवाभाति तन्वङ्गी ॥७॥
मृगपति-कटि-रम्भोरुहशोणायत-लोचना वरारोहा ।
करिवरगतिरतिललिता राजति रामा निरौपम्या ॥८॥
गीतं विद्यापतिना दृष्ट्वा रूपं विलक्षणं तस्याः ।
यस्येदृशी शुभाङ्गी ननु तेनाप्तश्चतुर्वर्गः ॥९॥

●

## १५

स्नायति सरसि सलीलं रहसि वधूटी सुवर्णगौराङ्गी ।
प्रहरति कामो बाणैर्मनांसि तां पश्यतां गाढम् ॥१॥
विगलति वारिप्रसरः शिरसिजभारात् सरोजनयनायाः ।
मुखचन्द्रद्युतिभीतो रोदिति मन्ये तमःस्तोमः ॥२॥
पीनघनस्तनयुगलं कोकद्वन्द्वं विभाति संश्लिष्टम् ।
कृत्वैकत्र न जाने विधिना केनात्र विन्यस्तम् ॥३॥
तदिदं कोकयुगं मा व्योमतलं यात्वितः समुड्डीय ।
इतिशङ्कयैव नूनं कृतहस्तस्वस्तिका तन्वी ॥४॥
सद्यःस्नाता तरुणी दधती वसनं शरीरसंसक्तम् ।
कामं जनयति कामं मनसि मुनीनामपि प्रसभम् ॥५॥
विद्यापतिः कवीशः कथयति पुण्येन लभ्यते महता ।
गुणवद्भिरीदृशी खलु गुणगणरुचिराङ्गना नियतम् ॥६॥

●

१६

युवती सद्यः स्नाता रुचिरा संश्लिष्टमुक्तधम्मिल्ला ।
दृष्टा मार्गे, पृष्टा रूपमिदं चोरितं कस्मात् ॥१॥
चिकुरनिपीडननिर्यद्विशदोदकबिन्दुसंहतिर्भाति ।
चामरभारान्मन्ये विगलति मुक्तामयो हारः ॥२॥
आर्द्रालिकसंलग्नं वदनं पुष्णाति कान्तिमत्यर्थम् ।
सौरभलुब्धैर्भ्रमरैर्भाति यथा सङ्गतं पद्मम् ॥३॥
विगलितकज्जलरेखं नेत्रद्वन्द्वं विभासते शोणम् ।
सिन्दूरप्रविकीर्णं दलयुग्मं पङ्कजस्येव ॥४॥
सघनस्तनयुगसीम्नि श्लिष्टं वसनं विभाति तन्वङ्ग्याः ।
कनक-श्रीफल-युगलं मन्ये जातं हिमच्छन्नम् ॥५॥
मामियमनुपमरमणी ह्रास्यत्यचिरेण गात्रसंसक्तम् ।
इतिशङ्कयैव जाने रोदिति जलबिन्दुभिर्वसनम् ॥६॥
भणति कविर्विद्यापतिराकर्णय मे वचो मुराराते ।
रूपमिदं ननु दृष्ट्वा वसने तव चित्तमासक्तम् ॥७॥

१७

मामवलोक्य जनान्तरदर्शन-वैलक्ष्य-चिन्तया निभृतम् ।
मन्दस्मितविच्छुरितं तदधरकिसलयमभूल्लसितम् ॥१॥
ईषद्धसितमनोहरभङ्गिम्ना यन्निवेदनीयन्तत् ।
साधु निवेदितमनया सलीलमेणीदृशा सर्वम् ॥२॥
मन्दस्मितमुल्लसितं जाता ज्योत्स्नाचमत्कृता रजनी ।
तस्याः कुटिलकटाक्षं विलोक्य मे प्रीतिरङ्कुरिता ॥३॥
दर्शन-सक्त-सुचञ्चल-तारक-माधुर्य-धुर्यया दृष्ट्या ।
मन्ये गगनाभोगं विहितं रोलम्ब-संवलितम् ॥४॥
तस्या निरुपम – रूपं विलोक्य पृच्छा मनस्यभूदुदिता ।
लावण्योच्छलसरसी कस्येयं को विजानाति ॥५॥
आरेचितचतुर-भ्रूलतिकं स्मित्वा विलोक्य मां प्रेम्णा ।
व्याकुलतामुपनीताः प्राणास्तन्व्या ममात्मन्तम् ॥६॥

भ्रमरनिरोधव्याजाल्लीलाकमलेन नेत्रमावृत्य ।
सचकितदृष्टिर्बाला सचमत्कारं गता गेहम् ॥७॥
सरभसगमनावेशात् सुव्यक्तमभूदुरोज — सौन्दर्यम् ।
कस्य न जनयति चित्ते लोभं सौवर्णमम्भोजम् ॥८॥
अर्धेनापिहितेनार्धेन च पिहितेन चातुरीकलया ।
वक्षोजाभोगेनानङ्गोत्तापस्तया विवृतः ॥९॥
मनसिजनिधिमुपदर्श्य स्तनयुगलं सामिदृश्य-सौन्दर्यम् ।
सङ्क्रमकामं कामं विनिवेद्य प्रस्थिता गेहम् ॥१०॥
विद्यापतिरभिधत्ते प्रीतिर्मनसोर्द्वयोः समुन्मिषिता ।
मा कश्चिन्ननु मदनो व्यथयतु पञ्चेषुभिर्विषमैः ॥११॥

१८

स्नानोत्तीर्णा यमुनासैकतभूमौ प्रफुल्लमुखपद्मा ।
राधापश्यत् पुरतः श्यामं श्यामाम्बुदाभिख्यम् ॥ १ ॥
गुरुजनमध्यगता सा लज्जानम्रानना विचिन्तयति ।
दर्शनसुखमुपलभ्यं केनोपायेन कान्तस्य ॥ २ ॥
गौराङ्गी सुविदग्धा निरुपमचातुर्यशालिनी रमणी ।
गमनविलम्बनसाधनकपटं प्राकल्पयत्तत्र ॥ ३ ॥
द्रुतपदमग्रं किञ्चिद् दूरं गत्वा तया सखीवृन्दात् ।
ईषद्वलितग्रीवं छिन्नो मुक्तामयो हारः ॥ ४ ॥
हे सख्यो मम हारस्त्रुटितः स्वयमेव पश्यतेदानीम् ।
इत्युक्तास्तात्सख्यस्तच्चयने व्यापृता जाताः ॥ ५ ॥
अत्रान्तरे चिरन्तनतृष्णातुरलोललोचना राधा ।
प्रापत् प्रियतमदर्शनसौख्यमभीष्टं विनिश्शङ्कम् ॥ ६ ॥
राधादृष्टिचकोर्या कृष्णमुखेन्दुप्रभामृतस्यन्दः ।
विनिपीतो रसपरवशमनसामन्दं तृषाकुलया ॥ ७ ॥
भणति कविर्विद्यापतिरुभयोरेव प्रयाति परिवृद्धिम् ।
दर्शनसुखकल्लोलितमानसयोः प्राक्तनी प्रीतिः ॥ ८ ॥

## १६

शरदिन्दुद्युतिगौरं तव मुखमाभाति मोदकृत् परमम्।
दृष्टेऽस्मिन् प्रविलुप्तं विरहतमिस्रोद्भवं दुःखम् ॥ १ ॥
अद्याप्राप्तं प्राप्तं रतिरिव साक्षान्मनोजसर्वस्वम्।
प्राक्तनजन्मोपार्जितपुण्यं परिणाममापन्नम् ॥ २ ॥
सुन्दरि ! दृष्टिमुदञ्चय शृणु मे वचनं रसोल्लसितम्।
हित्वा सहजां लज्जां पूरय मे मानसं भावम् ॥ ३ ॥
त्वं सरसा मधुमधुरा भासि यथा मालती भाति।
चिरतृष्णाकुलचित्तो भृङ्गो लभतां रसास्वादम् ॥ ४ ॥
अतिथिः समनुप्राप्तस्तन्वि ! वसन्तान्वितोऽद्य ते गेहम्।
पूर्वाङ्गीकृतमधुना वचनं ते पूर्णतां यातु ॥ ५ ॥
अद्य सुपुरुषेणाप्ता तुल्यगुणा सुन्दरी रमणी।
सदृशसमागममीप्सोर्धातुर्यत्नोऽभवत् सफलः ॥ ६ ॥

●

## २०

हरिणा कलितो हारो जाता राधा चमत्कृता सद्यः।
अर्धं माधवपाणौ राधाकण्ठे व्यभाच्च तस्यार्धम् ॥ १ ॥
कृत्रिम-कोपोदञ्चितनयनाभ्यां वीक्षितस्तया कृष्णः।
हासोच्छलितकपोलः सञ्जातस्तन्मुखं पश्यन् ॥ २ ॥
हसितं मधुरिमलसितं नैव समर्था निगूहितुं सुमुखी।
कृष्णवदनपरिचुम्बनमकरोत् कामोद्गमोल्लसिता ॥ ३ ॥
माधवकरकलितकुचा दुर्दममदनेषुपीडिता नितराम्।
तन्वी कोमलकदलीदलमिव कम्पाकुला जाता ॥ ४ ॥
तामथ मन्मथपीडाविधुरामालोक्य माधवस्तस्याः।
अधरमधयदतिमधुरं स्तनोपपीडं समाश्लिष्य ॥ ५ ॥
चामरमञ्जुलकुन्तलविस्रस्ता पुष्पसंहतिः पतिता।
पूर्वं निपीय मन्ये तमसा ताराः समुद्गीर्णाः ॥ ६ ॥
विद्यापतिरतिललितं कथयति रम्यं कवीश्वरो वचनम्।
सस्मितवदना मुदिता मिलिता राधा समं हरिणा ॥ ७ ॥

●

## २१

कृष्णे नयनपथातिथिभूते कान्ते ममोदिता लज्जा ।
लोचनचौरमरुन्धं कृत्वा नतमाननं यत्नात् ॥ १ ॥
प्रियमुखकान्तिं पातुं व्यग्रोऽधावत्ततः स चाञ्चल्यात् ।
हिमकरकिरणं लब्धुं यथा चकोरो भृशं तरलः ॥ २ ॥
अस्य पुनश्चञ्चलतां प्रविलोक्यायं मया ततो नीत्वा ।
चरणाङ्गुष्ठप्रान्ते विनियम्य प्रापितः स्थिरताम् ॥ ३ ॥
एष पुनर्मकरन्दास्वादोन्मादाभिभूतमधुपाभः ।
उत्पतने न समर्थस्तथापि पक्ष्मोन्नतिं तनुते ॥ ४ ॥
शनकैर्मां प्रति किञ्चित् तेनाभिहितं वचः सुधामधुरम् ।
श्रुत्वा तत् सखि ! कर्णौ सद्यः पिहितौ मया सम्यक् ॥ ५ ॥
तस्मिन्नेवावसरे वामो जातो मयि स्मरः क्रूरः ।
इषुभिरविध्यद्विषमैः सोऽयं मम मानसं प्रसभम् ॥ ६ ॥
सघनस्वेदोद्भेदाल्लोपमुपेता कपोलपत्राली ।
भङ्गुरतामुपनीता पुलकैर्मे कञ्चुकी तन्वी ॥ ७ ॥
पाणी जातौ कम्प्रौ वाणी जातास्फुटाक्षरा नितराम् ।
सखि ! तात्कालिकमनुभवमस्मि समर्था न वर्णयितुम् ॥ ८ ॥

## २२

पश्येयं सखि ! कृष्णं तृष्णेयं मे मनस्यभूदुदिता ।
तं पश्यन्त्या प्राप्तं प्राभृतमेतन्मनः-शल्यम् ॥ १ ॥
तदवधि नितरां मुग्धा कामविलासाववोधविधुराहम् ।
किं ब्रूयां किं शृणुयामिति वेत्तुं नाभवं शक्ता ॥ २ ॥
श्रावणघन इव वर्षति नयनद्वितयं निरन्तरं नितराम ।
विरहावेशादविरतमत्यर्थं कम्पते चित्तम् ॥ ३ ॥
कस्मात् पातकयोगात् सञ्जातं तस्य दर्शनं विषमम् ।
रभसादन्यकरे सखि । निक्षिप्तं जीवनं स्वस्य ॥ ४ ॥
नहि जाने किं कृतमिति मोहनचौरेण नर्मचतुरेण ।
पश्यन्नेवायं मामहरन्मे जीवितं नूनम् ॥ ५ ॥

तेन तदा सखि ! यावानादर-राशिः समर्पितो मह्यम् ।
तद्विस्मरणायासस्तत्स्मृतिमेवानिशं तनुते ॥ ६ ॥
भणति कविर्विद्यापतिरवहितहृदया शृणुष्व मे वचनम् ।
धैर्यं धेहि विमुग्धे प्राप्स्यसि नूनं मुरारातिम् ॥ ७ ॥

## २३

शृणु रसिक ! त्वं मुरलीं मा वादय कानने निभृतम् ।
श्रुतिपथपतितो मुरलीध्वनिर्मनो व्याकुलीकुरुते ॥ १ ॥
प्रतिजानेऽहं तावकपदकमलं सन्ततं समाश्लिष्य ।
तव दास्यं शुभसारं यावज्जीवं चरिष्यामि ॥ २ ॥
प्रतिभात्येवं मे ननु मदनभुजङ्गो गतो मनो दष्ट्वा ।
गरलप्रसराविष्टं चित्तं मे शून्यतां याति ॥ ३ ॥
अद्याहं परकीया नीता सम्मोहनं त्वया कामम् ।
मुरलीरवसंश्रवणात् कौलीनं मे समुत्पन्नम् ॥ ४ ॥
मम जानीहि मनोगतमेतत् त्वं कृष्ण ! नात्र सन्देहः ।
कथमपि तव नो शरणं त्यक्ष्याम्ययशोऽस्तु मे जगति ॥ ५ ॥
कथयति विद्यापतिकविरयि शृणु वनितोत्तमे वचः पथ्यम् ।
जितविधुवदने धन्ये मुदिता भज माधवं कान्तम् ॥ ६ ॥

## २४

शृणु शृणु सुन्दर माधव ! राधा तुभ्यं समर्पिता कान्ता ।
सा सरसिजमृदुगात्री त्वं खलु मधुपः क्षुधाविष्टः ॥ १ ।
आस्वाद्यं मधु सदयं ध्यायन् पुष्पेषुकौशलं सततम् ।
मृदुलैर्विध्यति पुष्पैर्यूनोः स्वान्तद्वयीं कामः ॥ २ ॥
चाटूक्तिभिरुचिताभिः प्रबोध्य धैर्यावलम्बनं कृत्वा ।
उरसिजसरसिजकोरक-युग्मे कार्यस्त्वया स्पर्शः ॥ ३ ॥
सन्ति कियन्तो मुक्ताहारन्यस्ताः सरा इति ज्ञातुम् ।
गणनाव्याजं कृत्वा संस्पृश्यस्तत्-कुचाभोगः ॥ ४ ॥

एतदवधि सा मुग्धा रतिरसमाधुर्यबोधविधुरालम् ।
रतलीलायां तस्मात् तस्या दोलाचला वृत्तिः ॥ ५ ॥
तनुमध्या सा बाला शिरीषसंस्पर्धि मार्दवं धत्ते ।
स्वल्पकमेव हि मान्मथतन्त्रं सह्यं भवेत् तस्याः ॥ ६ ॥
गायति विद्यापतिकविरतिशयमृदुलां ससाध्वसां राधाम् ।
कृष्णसमीपं नीत्वा दूती सम्प्रार्थनां विदधे ॥ ७ ॥

२५

परिहर मां सखि ! तुभ्यं मयार्पितोऽयं प्रणामपर्यायः ।
माधवसविधे बाला गन्तुमहं नोत्सहे जातु ॥ १ ॥
नैव हि विदिता काचिद् भङ्गीभणितिर्विदग्धसंवेद्या ।
इङ्गितमपि नो वेत्तुं शक्ता बोधो न मानस्य ॥ २ ॥
आलीभिर्नेपथ्यं निपुणाभिर्मे विधीयतेऽनुदिनम् ।
नो जाने निजकुन्तल—संयमचेष्टामपि स्तोकम् ॥ ३ ॥
सुरतपदं श्रुतिगोचरमद्यावधि नैव मेऽभवत् कुहचित् ।
कथमधुनाहं माधवसङ्गमयोग्या भविष्यामि ॥ ४ ॥
स हि वरनागरपुरुषो रसिको निपुणः कलास्वशेषासु ।
अहमबलाल्पज्ञाना सखि साम्यं नैव पश्यामि ॥ ५ ॥
कथयति विद्यापतिकविरयि मुग्धे किं मयात्र वक्तव्यम् ।
अद्यतनं ननु सङ्गतमतिशयमुचितं परं रम्यम् ॥ ६ ॥

२६

उपनीता वरशयनं राधालीभिः प्रबोध्य बहुयत्नात् ।
हर्षविशात् पाणिः कलितः कृष्णेन राधायाः ॥१॥
कृष्णकरस्य स्पर्शाद्राधा विप्रोषितद्युतिर्जाता ।
हिमकरवक्षोनिहिता सरोजिनीवाभवन्म्लाना ॥२॥
साश्रुमुखी बत बाला निगदति नननेति साध्वसाविष्टा ।
कुसुमालङ्कृतशयन—प्रान्ते शयिता समुद्विग्ना ॥३॥

विगलितनीवीबन्धं नाद्रियते जातु सा समाश्लेषम् ।
ईषत्—स्पर्शः स्तनयोः कथमपि कृष्णेन सम्प्राप्तः ॥४॥
मुखमवगुण्ठयति द्रागञ्चलमाकृष्य साध्वसाविष्टा ।
वरतनुरतिशयविकला प्रवेपते न स्थिरा भवति ॥५॥
भणति कविर्विद्यापतिरत्र हि धैर्यावलम्बनं सारम् ।
अधिकुरुते नववयसि प्राप्ते कामः शनैश्चित्तम् ॥६॥

२७

माधव-दर्शन-तृष्णातरलित-हृदया सखीजनान्तःस्था ।
कौतुकगृहमभि मन्दं गच्छन्ती राधिका रेजे ॥१॥
सर्वाङ्गशोभमानाभरणामालोक्य हेमगौराङ्गीम् ।
अभवदुदञ्चितकामो मुनिरप्यन्यस्य का वार्त्ता ॥२॥
नीलवसनपरिवेष्टितगौरतनुः क्षौमसंवृतमुखी सा ।
गच्छन्ती प्रियसविधे सङ्कुचिताङ्गी बभौ बाला ॥३॥
सख्यः प्रमुदितचित्ताः परिहासालाप–पेशलाचाराः ।
कौतुकभवनाभ्यन्तरमुपनीय तु तां परावृत्ताः ॥४॥
अथ धृत्वा तत्करयुगमानीय स्वान्तिकं मुकुन्दस्ताम् ।
तद्वदनेन्दुमपश्यद् दूरीकृत्यावगुण्ठन—प्रान्तम् ॥५॥
क्रमशो विगलितलज्जा भूत्वा कृष्णस्य सम्मुखी सुमुखी ।
मधुरालापप्रवणा मनसिजवशवर्त्तिनी जाता ॥६॥
नवरसरीतिसमृद्धं समनुभवन्तौ मनोभवोद्भेदम् ।
आनन्दाम्बुधिलीनौ राधाकृष्णौ विरेजाते ॥७॥
विद्यापतिना गीतं नवरसरीतिर्मनोहरा कामम् ।
विकसति वयसि नवीने हृदयद्वितये परा प्रीतिः ॥८॥

२८

शृणु शृणु नागर ! वचनं नीवीबन्धं कुतः परामृशसि ।
न हि मम नीवीग्रन्थौ सुरतधनं वर्त्तते गूढम् ॥ १ ॥
अश्रुतपूर्वमिदानीमेव त्वत्तः शृणोमि सुरतस्य ।
नामापि, नैव जाने किंरूपमिदं कुतो लभ्यम् ॥ २ ॥

  

सुरतान्वेषणकर्मणि विश्वासं कृष्ण धेहि प्रयतिष्ये।
भवने तन्मम नास्ति प्रक्ष्यामि सखीं कुतो लप्स्ये ॥ ३ ॥
शृणु मम सम्प्रति वचनं माधव सम्प्रार्थयेऽधुना त्यज माम्।
अन्वेष्य स्वसखीभिर्यदि लप्स्ये तर्हि तद्दास्ये ॥ ४ ॥
सुरतमभीप्सौ कृष्णे राधा बाधां तनोति सुविदग्धा।
विद्यापतिरभिधत्ते राधेयं नागरी रमणी ॥ ५ ॥

●

## २९

हठरतवाञ्छाविष्टे निर्दयभोगाभिलाषदुर्ललिते।
स्मरसन्तप्ते कान्ते बाला कमुपायमाद्रियताम् ॥ १ ॥
प्रौढवयाः खलु कान्तः कोमलमुग्धाङ्गवल्लरी चाहम्।
करिवरकरनिगृहीता मृणालिनीवास्मि संवृत्ता ॥ २ ॥
किं वच्मि प्रविवेकं सखि? तस्याहं दयाविहीनस्य।
वाञ्छति रसवैविध्यं सर्वं सखि! यौगपद्येन ॥ ३ ॥
रचिता कियती विनतिर्विहिता बद्धाञ्जलिर्मुहुः प्रणतिः।
स्वार्थपरोऽसौ भूयो रतिलीलोपायमातनुते ॥ ४ ॥
अनवसरे हठरभसाज्जातु रसो नाभ्युपैति सरसत्वम्।
सम्फुल्ले बत! कमले मधुपो रससम्पदं लभते ॥ ५ ॥
भणति कविर्विद्यापतिरत्र हि काम्यं मनःसाम्यम्।
प्रेमोपनिषत्सारं कथितमिदं सौख्यसर्वस्वम् ॥ ६ ॥

●

## ३०

माधव! तव लोचनयोर्यदवधि तिष्ठामि सम्मुखीनाहम्।
प्रकटीकुरुषे तदवधि रागावेशं त्वमत्यन्तम् ॥ १ ॥
नयनपथान्मयि दूरीभूतायामन्यथा जगद् भाति।
कृतकं हेम न सहते ज्वलनज्वालापरिष्वङ्गम् ॥ २ ॥
रीतिरियं तव सम्प्रति नन्ववबुद्धा मया सम्यक्।
कपटस्तव खलु चेतसि वाचि पुनः प्रीतिनेपथ्यम् ॥ ३ ॥

विनयोपेता मुद्रा रसभरगर्भस्तव प्रियालापः ।
अधुना सकलं जाने माधव ! परिहासमात्रन्तत् ॥ ४ ॥
वद किं कान्तामखिलां मधुमधुरैः सुस्मितैः समाकृष्य ।
विषगर्भैर्व्यवहारैस्तां पश्चात् तापयस्यनिशम् ॥ ५ ॥

## ३१

कोपं प्रत्यानेतुं स्वान्ते सखि ! भूरि जायते वाञ्छा ।
किन्तु नयनयुगलं मे निभालयत्येव तं सततम् ॥ १ ॥
हसितमहं विनियन्तुं प्रकामगाम्भीर्यमुद्रया चेष्टे ।
बत ! मुखमालि ! सहास्यं सहसा सञ्जायते तत्र ॥ २ ॥
श्रुतिपुरुषं सखि ! वचनं नैव हि शक्ता कथञ्चिदपि वक्तुम् ।
रोषभवोऽरुणरागः कपोलयोर्न स्थितिं धत्ते ॥ ३ ॥
किं सखि ! शीतलमधुरः शारदचन्द्रः प्रभाभरोल्लासी ।
ज्वलनज्वालाजालं जनयितुमीष्टे कदाचिदपि ॥ ४ ॥
मानविधानोपायाः कति कतिं नाप्यालिभिः प्रोक्ताः ।
परकीयं पाण्डित्यं काले वैफल्यमायाति ॥ ५ ॥
नखविच्छुरितं काम्यं नननेतिवचःप्रपञ्चसहकारम् ।
जानानाप्यहमेतत् त्रपाभिभूता न जानामि ॥ ६ ॥
नो भ्रूभङ्गविधानं नाप्यङ्गानां करोमि संवरणम् ।
क्षणमात्रेण हि सुलभा भवामि कान्तस्य किं वच्मि ॥ ७ ॥
स्वमतं मन्ये बहुमतमालीशिक्षावचो न गणयामि ।
विदितंवेयं विषमा विराजते मान्मथी माया ॥ ८ ॥
सखि ! विरहानलतापव्यथया खिन्नानलं परित्रातुम् ।
अत्ररसुधारसपानं तपनोत्तप्तान् यथा छाया ॥ ९ ॥
कथयति विद्यापतिकविरयमतिमधुरो विधिर्मनोजस्य ।
कामसमर्च्चनविधिना परमां कोटिं रतिर्याति ॥ १० ॥

## ३२

निविडतमोभरलीने रजनीयामेऽभिसारिकावेषा।
कृष्णसमीपमुपेता राधा दूतीवचोनिघ्ना ॥ १ ॥
माधवदृढभुजपाशे लीना तेनाभिचुम्बिता तन्वी।
पीताधरपीयूषा सीत्कृतिनिःश्वाससम्भृता जाता ॥ २ ॥
सङ्गमसुखमनुभूय श्रीकृष्णः प्राह तां सुधाधाराम्।
तन्मुखदर्शनतृष्णातरलीकृतमानसः कामम् ॥ ३ ॥
सुन्दरि ! सरसिजसौरभमनुभूतं त्वन्मुखानिलोच्छ्वासे।
अधरेऽमृतमाधुर्यं चेतस्तृप्तिप्रदं लब्धम् ॥ ४ ॥
वसति सुतनु ! तव गात्रे शिरीषपुष्पाधिवासिनी मृदुता।
वचने विलसति नूनं कोकिलकलकूजितं रम्यम् ॥ ५ ॥
अद्य कृतार्थं श्रवणं घ्राणस्तृप्तो वपुश्च सन्तृप्तम्।
रसना ननु चरितार्था मधुराधरपल्लवास्वादात् ॥ ६ ॥
किन्तु गुरुर्मम खेदो नयनयुगं मेऽधुनापि नो तृप्तम्।
घनतिमिराञ्चललीनं मुखं तवापश्यतः कान्ते ! ॥ ७ ॥
श्रुत्वा मधुरिपुवचनं परनिघ्ना प्राह राधिका कृष्णम्।
अत्रासूर्यम्पश्या प्राप्ताहं दूतिकानुनयात् ॥ ८ ॥
शीतलसलिलास्वादस्तृष्णोपशमक्षमस्त्वया लब्धः।
शमितश्चेतस्तापो बत ! किं लभ्यं मुखं दृष्ट्वा ॥ ९ ॥
भणति कविर्विद्यापतिरवधारय कृष्णवल्लभे राधे।
मधुरिपुनयनपिपासा नोपगता तृप्तिमद्यापि ॥ १० ॥

●

## ३३

यमुनायाः परपारं धृत्वा मम पाणिपल्लवं मृदुलम्।
प्रापय मां गोविन्द ! त्वमसि पटुस्तारण-ख्यातः ॥ १ ॥
तुभ्यमहं ननु दास्ये कण्ठादवतार्य रश्मिविच्छुरितम्।
तरपण्यं बहुमूल्यं मनोहरं मौक्तिकं हारम् ॥ २ ॥
सकलाः खलु मम सख्यो मया सहैवात्र याः समायाताः।
केन पथा यातास्ता हित्वा मामत्र नो जाने ॥ ४ ॥

न हि यास्यामि कथञ्चन तवात्र पार्श्वं यतोऽसि चपलस्त्वम् ।
यास्याम्यतोऽतिदूरं यमुनातीरं जनैः शून्यम् ॥ ४ ॥
विद्यापतिना भणितं भावं विज्ञाय गोपबालायाः ।
कृष्णं निरुपमरूपं भजस्व गोपाङ्गने कामम् ॥ ५ ॥

●

## ३४

कुञ्जकुटीरादभिनिष्क्रान्ता रुद्धा मुरारिणा राधा ।
कथयति सानुनयं तं मा कुरु चौर्यं मुराराते ! ॥ १ ॥
एकस्मिन् खलु नगरे वससीदं ते तथापि नो विदितम् ।
चौरोऽपि न स्वकीये नगरे चौर्यं समाचरति ॥ २ ॥
मुञ्च ममाञ्चलमधुना नूतनवसनं भवेद् विशीर्णं मे ।
जगति भविष्यत्ययशो मा कुरु मां लज्जितां कृष्ण ! ॥ ३ ॥
मम सङ्गिन्यः सख्यश्चलिता ह्यग्रेऽहमेकिका युवती ।
चञ्चति चपला गगने रजनी चेयं तमश्छन्ना ॥ ४ ॥
विद्यापतिना गीतं गुणवति !वचनं शृणुष्व मेऽवहिता ।
हरिणा सह नो काचिद् भीतिस्त्वं सर्वथा मुग्धा ॥ ५ ॥

●

## ३५

मानिनि ! कथमपि नोचितमधुना मानावलम्बनं कर्त्तुम् ।
पञ्चशरो जागरितः काममिदानीं समुल्लसति ॥१॥
स्निग्धा रजनी ज्योत्स्ना चञ्चति समयो मनोहरोऽतितराम् ।
सम्प्रति सङ्गमसौख्यं सङ्गमलाभैक- संवेद्यम् ॥२॥
भृङ्गमिथुनकुलमधुना मदकलगुञ्जापरायणं कामम् ।
पिबति सरभसं मधुरं मधु, सम्पश्य प्रिये ! परितः ॥३॥
कान्ताभिर्निजपतयः कामं सन्तर्पिताः प्रमोदन्ते ।
तव पतिरेकः केवल—मधुनाप्यास्ते तृषाविष्टः ॥४॥
वरतनु ! तव तनुरेषा साक्षादाभाति तीर्थराज इव ।
रोमावलिरिह यमुना हारलता जाह्नवीधारा ॥५॥

त्रिवलिविभङ्गस्ते खलु सङ्गमलहरीपरम्परा तरला ।
शिवमूर्त्तिश्रियमतुलां पुष्णाति पयोधर-द्वन्द्वम् ॥६॥
सुन्दरि ! शरीर-तीर्थे यौवन-पुण्य-क्षणोऽचिरस्थायी ।
पतिरहमार्त्तो याचे प्रदेहि धन्येऽद्य सर्वस्वम् ॥७॥
विद्यापतिरभिधत्ते चिरसञ्चितमदनवेदना विषमा ।
कान्ते ! प्रापय दृढ़तां दीपशिखाचञ्चलं चित्तम् ॥८॥

●

## ३६

कथय कथय सखि ! सत्यं न कुरु व्याजावलम्बनायासम् ।
सुकृतैः केनावाप्ता मन्मथतन्त्रे महासिद्धिः ॥१॥
तिलकं मृगमदरचितं भाले विन्यस्य चन्द्रशकलाभे ।
अगुरुसुवासितमखिलं विधाय गात्रं रसोल्लसितम् ॥२॥
मेचकरुचिमतिरुचिरं प्रतनु विविक्तं मनोहरं क्षौमम् ।
दधती गुरुजनभीता पश्यसि भानुं निमज्जन्तम् ॥३॥
अम्बरमखिलं रजनी कदानु नीलांशुरञ्जित कुरुते ।
इत्याशया प्रतीचीं दिशमौत्सुक्याद्विलोकयसि ॥४॥
मुद्रितनयनकुवलया सपुलकदेहा गतागतं कुरुषे ।
मन्येऽभ्यस्यसि नैशे तिमिरे पादाब्जविन्यासम् ॥५॥
रोमाञ्चोदगमभूषितवपुषा स्मितशोभिना मुखाब्जेन ।
कस्मान्मुदिता भूयः शय्योत्थायं परिभ्रमसि ॥६॥
विद्यापतिरभिधत्ते चतुरा जानाति चातुरीं सर्वाम् ।
तस्मात् कैतवयुक्तं वचनं नैवौचितीं भजते ॥७॥

●

## ३७

नव्यानुरागरुचिरा राधा कृष्णाभिसारिकावेषा ।
एकाकिन्यविशङ्कं निर्गन्तुं प्रोद्यता जाता ॥१॥
हित्वा मणिमयहारं तुङ्गस्तनभारकारणं दीप्तम् ।
कङ्कणमपि मणिबन्धाद् रत्नद्युतिभास्वरं त्यक्त्वा ॥२॥

पदसरसीरुहसङ्गान्मुखरमपाकृत्य नूपुरं त्वरितम् ।
समधिकममुत्सुकचित्ता प्रयाति कृष्णान्तिकं राधा ॥३॥
अन्धतमससञ्छन्ना घोरा रजनी सुदुर्गमः पन्थाः ।
किन्तु मनोभवदीप्ता गच्छति राधा निराबाधा ॥४॥
प्रेमायुधसाचिव्याद् विघ्नव्यूहं विभिद्य निश्शेषम् ।
निरुपमरागोल्लसिता कृष्णमुपेता मुदा सुधा ॥५॥




## ३८

मधुरयुगलतनुशोभां मनसिजमनसोऽपि मोहिनीं सुतराम् ।
दर्शं दर्शं दृष्टिः पक्ष्मनिपातं न चेतयते ॥ ॥
परिशीलितमधिरजनि प्रोल्लासदुद्दाममान्मथं तन्त्रम् ।
जागरजनितजडिम्ना युगलाङ्गेषु प्रयाति वैशद्यम् ॥२॥
विलुलितचञ्चलकुन्तलविस्रस्ता पुष्पमालिका रुचिरा ।
अधुनान्यैवाभाति प्रभातवाताहता म्लाना ॥३॥
पारस्परिक - मुखद्युतिदर्शन-मग्नस्य रम्ययुगलस्य ।
प्रस्थानोचितवचनं मध्येवदनं परिस्खलति ॥४॥
अरुणोदयमासन्नं विलोक्य कुञ्जान्निकेतनं स्वं स्वम् ।
युगले गन्तुमनस्यपि गमनं शैथिल्यमापन्नम् ॥५॥
भाविविरहविषदग्धा युगलस्यासीत् तनुद्युतिर्म्लाना ।
अविरलबाष्पप्रसरैर्जडिमाविष्टेव नेत्रश्रीः ॥५॥
भाति यथा निःस्पन्दा मूर्त्तिर्मिथुनस्य भित्तिचित्रस्था ।
युगलच्छविरभिरम्या तदा तथासीज्जडीभूता ॥७॥
प्रस्थानोद्यमसमये करणव्यापारदैन्यसंसृष्टे ।
प्रणयाम्भोधिजलौघो जातः सहसा समुद्वेलः ॥८॥
चैतन्यं विनिमीलितमुदयमुपेतः प्रगाढसम्मोहः ।
सञ्ज्ञाशून्याद्दृश्यत युगलदशागोचरा वाचाम् ॥९॥
प्रेमाब्धेरिदमभुतमस्तमिताशेषभावनं दृश्यम् ।
दर्शं दर्शं दूती क्षणमात्रं तन्मयीभूता ॥१०॥
अथ युगलस्य मनःस्थितिमेवं दृष्ट्वा सुनिश्चलां दूती ।
प्रसरदरुणरुचिचिरं गगनाभोगं निभालयति ॥११॥

रजनिरतीताशेषा लोकः सर्वोऽवभाति जागरितः ।
दृष्ट्वा रहस्यरक्षा-व्याकुलचित्ताभवद् दूती ॥१२॥
कृत्वा बहुतरकौशलमचिरेणैव व्ययोजयद् युगलम् ।
प्रणयरसज्ञा सत्यपि दूती कौलीन-सन्त्रस्ता ॥१३॥
इत्थं कथमपि लोकस्थितिरक्षा—चिन्तया युगलम् ।
स्वं स्वं भवनं दूती निपुणं प्रस्थापयामास ॥१४॥
राधाहृदये कृष्णः, स्वान्ते कृष्णस्य मोहिनी राधा ।
शाश्वतलीला—लीनौ निरवधि कामं विराजेते ॥१५॥

●

३६

अभ्यर्थनां मदीयां श्रृणु माधव ! मां विहाय मा याहि ।
सौख्यं ममापनीयानेष्यसि किं प्राभृतं ब्रूहि ॥१॥
गोकुलतः प्रक्रान्तो मथुरामार्गे वनान्तरे गच्छन् ।
अन्यासक्तो भूत्वा स्मरिष्यसि त्वं न मां कान्त ॥२॥
त्यक्त्वा किन्त्वहमखिलं हीरकमाणिक्यमौक्तिक-प्रकरम् ।
रत्नाभ्यधिकं भूयस्त्वामेव विधिं प्रयाचिष्ये ॥३॥
हित्वा गोकुलवासं कृष्णे मथुरापरायणे जाते ।
विलपति राधानुदिनं माधवविरहे भृशं दीना ॥४॥
प्रस्थानोद्यतचरणं द्रष्टुं नैवाभवं समर्थाहम् ।
उच्छलदश्रुव्यवहितनयनाञ्चलवञ्चिता कान्तम् ॥५॥
निवसन् मथुरापुर्यां कान्तो जातो वशम्वदोऽन्यस्याः ।
कथमेवं सखि ! सफलो ममाभिलाषद्रुमो भूयात् ॥६॥
प्रियतमसविधे नित्यं विहरन्ती भाति कामिनी कामम् ।
चन्द्रसमीपमुपेता भाति यथा भास्वती तारा ॥७॥
भणति कविर्विद्यापतिराकर्णय मे वराङ्गने ! सूक्तिम् ।
अधिहृदयं ननु धैर्यं धेहि न ते शोभते दैन्यम् ॥८॥

●

४०

मानवशीकृतहृदहं प्रियतमविमुखी सती स्थिताभूवम् ।
नैपथ्यमङ्गनाया धृत्वा प्राप्तः स मानमहरन्मे ॥ ॥
अद्यतनोऽनुभवः सखि ! वचसा शक्यं न साधु वर्णयितुम् ।
नागरवरोऽभ्युपेतः कृत्वा कपटं ममोपान्तम् ॥२॥
मेचकमयूरचन्द्रक-ललितं मुकुटं व्युदस्य यत्नेन ।
रचितस्तेन शिरोरुहजाले सीमन्तरेखाङ्कः ॥३॥
प्रक्षाल्य भालदेशाच्चन्दनचर्चां निवेश्य सिन्दूरम् ।
नयनाम्भोजद्वितये श्रीरानीताञ्जनप्रभवा ॥४॥
अपसार्य हेमकुण्डलयुग्मं मणिकर्णिकाद्वयं लोलम् ।
विनिवेशितमतिरुचिरं तरलद्युतिरञ्जितकपोलम् ॥५॥
चञ्चलकुन्तल—निचयं वेणीरुपेण साधु संग्रथ्य ।
कञ्चुलिकान्तः कृत्वा कदम्बयुग्मं स्तनप्रख्यम् ॥६॥
तुङ्गस्तनपरिणाहे मुक्ताहारं निधाय चतुरस्रम् ।
चरणसरोरुहयुगले मणिमञ्जीरं समासज्य ॥७॥
मणिगणमण्डितकाञ्चनकङ्कणयुगलाभिराम—करमूलः ।
चञ्चन्मौक्तिकलोलक - विरचितनासाग्रसंशोभः ॥८॥
परिधायाम्बरमरुणं स्त्रीजनपरिधानलोलया निपुणम् ।
निरुपमरमणीरुपं परिशीलितवानसौ चतुरः ॥९॥
अथ करकलितविपञ्चीदण्डो ललनाभिरामया गत्या ।
चलितो मामभि मनसिजपरवशहृदयो मुरारातिः ॥१०॥
आगत्य मन्दमन्दं किञ्चिददूरे कदम्बतरुमूले ।
वीणातन्त्रीवादनसंलग्नोऽसौ स्थितो निभृतम् ॥११॥
तदनु विपञ्चीरणितं यमुनातटवर्त्तिकुञ्जेषु ।
सुमधुरगीतानुगतं प्रादुरभूच्चित्तसंवननम् ॥१२॥
श्रुतिसरणिं मम याता वीणाझङ्कारमाधुरी दिव्या ।
कौतूहलमुद्भिन्नं चेतसि मम तां विलोकयितुम् ॥१३॥
गत्वा मम खलु दूती तत्सन्निधे प्राब्रवीदिदं वचनम् ।
एहि नवागतयुवति ! श्रोतुं ते गीतमीहते राधा ॥ ४॥
वचसानेन प्रमुदितहृदया प्राप्ता मदन्तिकं श्यामा ।
बाहुग्राहञ्चैनां न्यवेशयं स्वासने हृष्टा ॥१५॥

अर्धासनमध्युषिता विनिहितवीणाभरा निजोत्सङ्गे ।
सा स्वेदार्द्रकपोला पुलकभरालङ्कृता जाता ।।१६।।
अथ तस्यास्तरलाङ्गुलिनर्त्तसञ्जात-रागझाङ्कारैः ।
श्रुतिपुटपतितैर्जातं प्रत्यङ्गं मे रसोच्छ्वसितम् ।।१७।।
श्रावं श्रावं मधुरं वीणारणितं निकुञ्जसंलीना ।
प्रीता जाता नितरां दत्ता मणिमालिका तस्यै ।।१८।।
पृष्टा सा वरयुवतिर्भद्रे किन्नाम ते क्व चावासः ।
किञ्च कुलं वद हेतोः कस्मादत्रागतासीति ।।१९।।
अवदत् सा सुखदाहं मथुरा वसतिः कुले यदोर्जन्म ।
गुणिजनपीडननिरतो राजा तत्रेत्यहं भीता ।।२०।।
वैदग्धीं विमृशन्ती तन्त्रीवाद्ये विलक्षणं तस्याः ।
गुणगौरवहृतहृदयावोचं याचस्व यदभीष्टम् ।।२१।।
अथ सावददयि सुन्दरि ! यदि मे दातुं त्वमुद्यता कामम् ।
मानमणिं ननु मह्यं वितर महार्धं ममाभीष्टम् ।।२२।।
श्रुत्वैतावद्वचनं स्वरसंयोगं विभाव्य कान्तस्य ।
पल्लवितस्मितवदनं साचीकृत्य स्थिता विमुखी ।।२३।।
स्मयमानाधररुचिरं लज्जारुणिमानुरञ्जितकपोलम् ।
सुरभिसमीरणनर्त्तित–नीलालकलालितोत्तंसम् ।।२४।।
अवनतनिश्चलतारकपक्ष्मलनयनं विचुम्ब्य मे वदनम् ।
मामारोप्योत्सङ्गे चतुरोऽसौ मां समाश्लिक्षत् ।।२५।।
विलयमुपेतो हृदये प्रियतमपरिरम्भपीडितो मानः ।
पुष्पन्धयचयगुञ्जितकुञ्जे कामः कृती जातः ।।२६।।

●

४१

पुरतो दृष्ट्वा कृष्णं पाणिभ्यां प्रावृतः स्तनाभोगः ।
शक्ता नैव पिधातुं कनकाचलमब्जयुग्मेन ।। १ ।।
हर्षभरोच्छलच्चित्तो मम मुखकान्तिं निभालयन्नितराम् ।
पुलकाञ्चित-तनुलकितामसौ तदा मां समाश्लिक्षत् ।। २ ।।

अञ्चलमथ मम तत्र व्यपनीतं तेन चञ्चलेनाशु ।
विस्रस्ता मे नीवी तदनु रसोल्लासवैवश्यात् ॥ ३ ॥
सखि ! दृष्टोऽयं स्वप्नो मयाद्य किं वच्मि जायते लज्जा ।
हर्षाश्रुभिरभवन्मे समुच्छलं लोचन- द्वन्द्वम् ॥ ४ ॥
नूतनकिसलययुग्मं मृदुले प्रेमाङ्कुरे समुद्भिन्नम् ।
विद्यापतिकविराह स्वप्नोऽयं नो मृषा भावी ॥ ५ ॥

४२

शयिता मुक्ताहारं कण्ठे दधती निकेतने शून्ये ।
रजनिविरामेऽपश्यं हे सखि ! कान्तः समायातः ॥ १ ॥
मम सविधे समुपेतो वेपथुविवशेन पाणिना निपुणम् ।
स हि सखि ! दूरीकुरुते हारं पीनस्तनाभोगात् ॥ २ ॥
तदनु कुचोपरि कम्प्रं निदधानः पाणिपल्लवं प्रेयान् ।
मम मुखचन्द्रं मुग्धो भावनिमग्नो निभालयति । ॥ ३ ॥
हतभागा ननु नितरां हे सखि ! किं वच्मि दग्धसौख्याहम् ।
वैरपरा मयि निद्रा तदैव दूरङ्गता—सहसा ॥ ४ ॥
सम्प्रति पश्चात्तापो विषमो दुःखाकरोति मे चित्तम् ।
नालोकयितुं लब्धो गोविन्दोऽलं गुणागारः ॥ ५ ॥
कविना विद्यापतिना गीतं धन्येऽधुना धृतिं धेहि ।
नाकाले फलबन्धी कियदपि सिक्तो भवेद् विटपः ॥ ६ ॥

४३

यस्मिन् देशे मधुरं कोकिलकलकूजितं सदा लुप्तम् ।
मधुपकुलं कलगुञ्जन- पराङ्मुखं सर्वदा जातम् ॥ १ ॥
विविधाः षड्ऋतुशोभा यस्मान्नियतं प्रवासमापन्नाः ।
यस्मिन्निवसत्यबलः सचिवैर्हीनो हि पञ्चेषुः ॥ २ ॥
यत्र न भाषा सरसा प्रेमावेशोऽपि विद्यते विरलः ।
सखि ! तत्रैव हि देशे कान्तेनाङ्गीकृता वसतिः ॥ ३ ॥

कथिताप्यतिशयसरला यत्र कथा नैव बुध्यते लोकैः ।
सहृदयजनसंवेद्यैरालि ! विधेयं किमिङ्गितैस्तत्र ॥ ४ ॥
गुणकणिकापि च काचन यस्मिन् देशे न शक्यते लब्धुम् ।
तत्र कथं मम दयितो रत इति वेत्तुं न शक्नोमि ॥ ५ ॥
अहमतिहीना हे सखि ! धिग्वादस्यास्मि भाजनं नूनम् ।
तस्य पुनर्माहात्म्यं किं वक्तव्यं मया भूयः ॥ ६ ॥
मूढतमाहं रमणी रमणीलोके न जातु रमणीया ।
अथवा नूनं कृष्णो रतिपरिहारव्रतं चरति ॥ ७ ॥

●

४४

ध्याय ध्यायं कान्तं सरसिजवदना विषादिनी राधा ।
करविन्यस्तकपोला मुञ्चत्यश्रूणि निःशब्दम् ॥ १ ॥
सघनं कुन्तलजालं लुलितं स्रस्तञ्च वक्षसो वसनम् ।
चेतयते नो तन्वी प्राप्य दशामीदृशीं विधुराम् ॥ २ ॥
स्मारं स्मारं प्रीतिं त्वया प्रदत्तां पुरा तथानुपमाम् ।
अधुना भूलुठिता सा तुषानलोत्तापमावहति ॥ ३ ॥
तव पन्थानं सततं पश्यन्ती त्वां कदापि नालोक्य ।
वहति न मनसा धैर्यं नैराश्याम्भोधि—निर्मग्ना ॥ ४ ॥
कियदवधि त्वं माधव ! मानमवालम्ब्य वाञ्छसि स्थातुम् ।
विरहार्त्ता बत ! राधा तव दर्शनमीहतेऽभीक्ष्णम् ॥ ५ ॥
कमलं तोयाधारे निवसति गगने च राजते भास्वान् ।
कुमुदिन्यपि बत ! सरसि व्योम्नि विधुर्भाति बहुदूरे ॥ ६ ॥
गगने गर्जति मेघः पर्वतशिखरे च नृत्यति मयूरी ।
प्रीतिर्मनसि निरूढा न हि सहते दूरभूयस्त्वम् ॥ ७ ॥
विततेऽस्मिन्ननु भुवने कति सुजनाः सन्ति ये विजानन्ति ।
देशकृताद् व्यवधानात् प्रीतिगतिर्नैति कुण्ठत्वम् ॥ ८ ॥
भणति कविर्विद्यापतिरयमर्तिविषमो न शोभते मानः ।
वचनमिदं खलु दूत्याः श्रुत्वा कृष्णः सलज्जोऽभूत् ॥ ९ ॥

●

## ४५

शरदियमधुना विलसति मेघापगमप्रभास्वरालोका ।
दिशि दिशि मोदमुपेता पद्मवनी हासमातनुते ॥ १ ॥
सखि विरहाकुलमनसा माधवमभ्यर्थये समागन्तुम् ।
त्रिभुवनमखिलं तिक्तं भाति विना तं मनोलग्नम् ॥ २ ॥
उदयं समनुप्राप्तः श्यामलशोभामनोहरश्चन्द्रः ।
विज्ञायेदं वृत्तं यातश्चन्द्रो नभोमध्यम् ॥ ३ ॥
गाथेयं जननिवहे प्रथिता सार्थक्य-सम्भृता भाति ।
दुर्दिनविगमे जाते सुदिनं साम्मुख्यमभ्येति ॥ ४ ॥
सखि ! सत्वरमागच्छ प्रतीक्षणोद्युक्तमानसा यामि ।
येन पथैष्यति कान्तस्तं पन्थानं विलोकयितुम् ॥ ५ ॥
कान्तश्चिरप्रवासी साम्प्रतमागच्छतीति विदितार्था ।
प्राण-प्रत्यावर्त्तन-सौख्येनाप्लाविता राधा ॥ ६ ॥
सौधगता सा सुतनुस्तदनु समाश्रित्य रत्नपर्यङ्कम् ।
वातायनसंसक्ता पश्यति कृष्णस्य पन्थानम् ॥ ७ ॥
धावति चेतो यदवधि तदवधि दृष्टिं निधाय पश्यामि ।
एवं मनसि ध्यात्वा प्रतीक्षते माधवं राधा ॥ ८ ॥
अनलशिखानिलशून्ये देशे यद्वत् प्रयाति मालिन्यम् ।
तद्वद्विरहविषण्णा राधा वैवर्ण्यमभ्येति ॥ ९ ॥

●

## ४६

आशा सखि ! संलग्ना मार्गे कान्तस्य भाति मे मधुरा ।
न हि जाने कियदवधि व्यथया ताम्येदुपोषिता दृष्टिः ॥ १ ॥
मम शपथं खलु दत्त्वा प्रक्ष्यसि तं त्वं स्फुटं समाख्यातुम् ।
जीवनकाले दर्शनमाशास्यं वा न वेतीदम् ॥ २ ॥ २ ॥
हरिरिह हे सखि ! कान्तो मम सविधे नूनमेष्यतीत्येवम् ।
दुर्लभलाभस्पृहया दुर्ललितं ताम्यति स्वान्तम् ॥ ३ ॥
अधुना सखि ! मम जीवः संशयमापद्य खिद्यते नितराम् ।
स्थातव्यं ननु देहे गन्तव्यं वेति निर्णयाभावात् ॥ ४ ॥

अभिलाषः परिपूर्णो भविता किमु वा न वा भविता ।
संशयसूत्राबद्धः खेलति कण्ठागतो जीवः ॥ ५ ॥
राधा-वचनं विकलं श्रुत्वा तस्याः सखी भृशं खिन्ना ।
माधवसविधे गत्वा व्याचख्यौ तद्दशामेवम् ॥ ६ ॥
नयनविनिस्सृत-बाष्पप्रसरो यातोऽधुना पदप्रान्तम् ।
सरसिजमपि पुष्णाति स्थलकमलासङ्गिनीं शोभाम् ॥ ७ ॥
अधरारुणिमा सहजस्तस्या नैवाद्य लक्ष्यतां याति ।
शिशिरे हिमकणधौतः किसलय इव सोऽद्य विच्छायः ॥ ८ ॥
माधव ! यत्नैश्छन्ना अपि तन्नेत्रोदबिन्दवःप्रसृताः ।
उपशाम्यन्ति न कथमपि किं ब्रूमस्तत्कथां कष्टाम् ॥ ९ ॥
सम्प्रति शिथिलं मत्वा तवानुरागस्य बन्धनं चित्ते ।
प्राप्ता वक्तुमहं यन्मनसिजरीतिं न सा स्मरति ॥ १० ॥

४७

कुसुमितमधुना विपिनं कुञ्जकुटीरेषु भाति पुष्पश्रीः ।
प्रसरति कोकिलकूजनगीतं कर्णामृतं परितः ॥ १ ॥
मलयानिललहरीयं हिमगिरिशिखरेषु साम्प्रतं वाति ।
नागच्छति मम कान्तो निजदेशं प्रोषितोऽद्यापि ॥ २ ॥
चन्दनचर्चा दाहं जनयति चन्द्रोऽपि तापमावहति ।
अलिविरुतैरुपवनमपि मम सखि ! पीडां प्रपञ्चयति ॥ ३ ॥
वासन्तेऽस्मिन् समये सम्प्राप्तेऽपि प्रियो विदेशस्थः ।
जानाम्यनेन नियतं प्रतिकूलो मे विधिर्नितराम् ॥ ४ ॥
प्रियतममुखमविरामं वीतनिमेषं विलोकयन्त्या मे ।
तृष्णातरला दृष्टिर्नोपगता तृप्तिसाकल्यम् ॥ ५ ॥
अस्मिन्नुन्मदमदने हर्सोल्लासोच्छले वसन्तर्त्तौ ।
सङ्कटमेवं विषहे नन्वबलाजीवनं कठिनम् ॥ ६ ॥
हिमदग्धेव कमलिनी प्रतिदिनमेतद्वपुः क्षयं याति ।
जीविष्यामि नवाहं विरहोन्मथितेति नो वेद्मि ॥ ७ ॥
विद्यापतिरभिधत्ते प्रियविरहोत्तप्तजीवितं धिग्धिक् ।
निष्करुणो बत ! कामं कृष्णो नैवात्र सन्देहः ॥ ८ ॥

## ४८

सखि ! यदि कल्पद्रुमतलमेवं छायाविवर्जितं जातम् ।
हिमकिरणोऽनलवर्षी जातः शैत्यश्रिया हीनः ॥१॥
तिग्मकरो यदि हे सखि ! न निराकुरुते दिवातनं शीतम् ।
वद मां तर्हि किमर्थं जीवितभारं सहिष्येऽहम् ॥२॥
सखि ! सर्वा परिपाटी यासीत् पूर्वं गता हि सा लोपम् ।
धनदेनाप्यधनार्त्तिर्ब्रत ! नो दूरीकृता कामम् ॥३॥
सखि ! मम जीवनकुसुमे दुःखशिलाराशिदुर्वहो भारः ।
प्राणावधिरुत्पीडन दारुण-दुःख—प्रदो जातः ॥४॥
जन्मनि जन्मनि हे सखि ! हरगौरीपूजनं मयाचरितम् ।
किन्तु शिवः खलु लब्धः शक्तिसमाश्लेषनिर्मग्नः ॥५॥
कामगवीं सखि ! मत्वा कामदुधां सार्चिता मया बहुशः ।
कियतौत्सुक्येन समं, किन्तु न पूर्णा ममाकाङ्क्षा ॥६॥
अमृतमये सखि ! सरसि स्नाताहं तृप्तिवाञ्छयाविष्टा ।
किं वच्मि मे तथापि प्राणाः सन्तापसंविग्नाः ॥७॥
भणति कविर्विद्यापतिरेतदशक्यं परीक्षितुं सद्भिः ।
कस्मादभवद्धेतोरेवं धातुः पराङ्मुखी वृत्तिः ॥८॥

●

## ४९

परदेशं प्रस्थातुं हे सखि ! कान्तोऽद्य तत्परो नूनम् ।
कुलकामिन्यसमर्था वक्तुमहं तत् त्वमेव तं ब्रूहि ॥१॥
दुःखं विरह-प्रभवं दुष्टजनैर्नैव शक्यमनुमातुम् ।
तस्मात् त्वमसि नियुक्ता मद्वचनात् प्रार्थनां कर्त्तुम् ॥२॥
मेदुर-मलयजसौरभसुभगे वाति प्रकाममनिलेऽद्य ।
मञ्जुलकोकिल-कूजित-पूजित-वृन्दावनोद्देशे ॥३॥
कोमल-शीतलसरस-प्रभाभरोल्लास-सम्मदाध्माते ।
मन्मथसचिवे चन्द्रे नृत्यति यमुनाजले रम्ये ॥४॥
जगदुन्मादनपरमव्रतं चरिष्णौ निरन्तरं मदने ।
प्रस्थातुं खलु वेला नैवेयं मे शुभा भाति ॥५॥

निवसत्वत्रैव हरिः कियन्ति यावद्दिनान्यलं यान्ति ।
तन्मुखचन्द्रविलोकनसुखविच्छेदो यथा न स्यात् ॥६॥
भोक्ष्येऽहं ननु नियतं यदर्जितं तत्फलं न सन्देहः ।
असदृशजनमुखनिर्गत-निन्दावचनैरहं रक्ष्या ॥७॥
हरिरन्यां यदि ललनामिच्छेत् सङ्गन्तुमुत्सुकोऽत्यर्थम् ।
ज्वालाजालजटाले ज्वलने नूनं पतिष्यामि ॥८॥

●

## ५०

प्रोषितपतिका विजने निःस्तब्धाभोगदुस्सहे भवने ।
तन्वी वसुधाशयनं समधिशयाना विचिन्तयति ॥१॥
कियदुग्रं मम पापं लिखितं यस्येदृशो गुरुर्दण्डः ।
ननु धात्रा मम भाले दाहकरैरक्षरैर्नियतम् ॥२॥
नवविरहार्त्ति-विमूढ़ा झटिति चमत्कृत्य तूर्णमुत्थाय ।
कमपि न दृष्ट्वा गेहे लज्जानतमाननं कुरुते ॥३॥
स्नेहमयो यो बन्धुः पार्श्वादद्यास्ति विच्युतः सोऽपि ।
कान्तकरक्रीडनक-प्रतिमा चेयं च्युता तस्मात् ॥३॥
तन्मार्गे बत दत्त्वा तृष्णाभरचञ्चलाञ्चलां दृष्टिम् ।
कति दिवसाः खल्वेवं नेयाः सततं प्रतीक्षायाम् ॥४॥
कथयति विद्यापतिकविरेतत्प्रेमाद्भुतं समाभाति ।
विरहानलपरितप्तं प्रेमसुवर्णं प्रकाशतेऽतितराम् ॥५॥

●

## ५१

विरहतनूकृततनुरुचिरिन्दुकलासन्निभं मुखं दधती ।
लोचनयुगलविनिर्यत्सलिलैर्निर्माति सा तटिनीम् ॥ १ ॥
अश्रूदकपरिपूर्णामवगाह्य नदीं निमज्जनार्द्राङ्गी ।
धृतबिसमाला दीना तव नामाहर्निशं जपति ॥ २ ॥
अधिवृन्दावनपुण्यक्षेत्रं धन्या तपश्चरत्युग्रम् ।
तस्या मानसवेदिं परितो ज्वलति स्मरज्वालः ॥ ३ ॥

कृत्वा जीवितमिन्धनमनले स्मृतिसज्वले जुहोत्यनिशम् ।
सद्यस्तद्वधजातं निपतेत् त्वयि पातकं घोरम् ॥ ४ ॥
चिकुरमयीं कुशपूलीं करकमले सा निधाय तन्वङ्गी ।
पूर्णाहुतिविधिपूर्तिं पयोधराभ्यां प्रकल्पयति ॥ ५ ॥
विद्यापतिना भणितं शृणु मे तथ्यं वचः कृष्ण ! ।
सा विरहार्त्ता सततं तव पन्थानं विलोकयति ॥ ६ ॥

५२

यदवधि कान्तः सस्मितमालपति प्रीतिसम्भृतस्वान्तः ।
तदवधि स खलु प्रेयांस्त्वञ्चापि प्रेयसी तस्य ॥ १ ॥
यदि स कदाचिन्निगदति वचनं परुषार्थगर्भितं किञ्चित् ।
तर्हि तवेयं प्रीतिर्दवीयसी जायते कामम् ॥ २ ॥
संसारेऽस्मिन् क्वचिदपि दृष्टं दृश्यं मयेदृशं नैव ।
चित्रं सखि ! ते प्रीतिर्या मानान्म्लानिमायाति ॥ ३ ॥
जीवितमयि यो मनुते द्वितीयमालि स्वकं सदैव त्वाम् ।
तस्मिन्नेव प्रेयसि मानाविष्टासि सञ्जाता ॥ ४ ॥
सकलः खलु सन्तापो विलयं नियतं प्रयाति तत्प्रेम्णा ।
कोऽत्र जगति सखि ! मधुरालापैर्नो वश्यतां याति ॥ ५ ॥
निजदोषं मत्वापि प्रसभं परिहर्त्तुमुद्यता कृष्णम् ।
स्मितमधुरं ननु वचनं वदसि न धत्से परं मौनम् ॥ ६ ॥
मदनसपर्यासमये सुमुखि ! त्वं हन्त निष्ठुरात्यर्थम् ।
औदासीन्यविरुग्णा भजसि न कान्तं स्मराविष्टम् ॥ ७ ॥
भणति कविर्विद्यापतिरेवं मानावलम्बनीं राधाम् ।
आलिर्वदति किमर्थं पिशुनोत्साहं विवर्धयसि ॥ ८ ॥

५३

यत्रागाधरसाढ्या प्रेमधुनी वेगसम्भृता वहति।
तत्रैवोदयमयते कलहः प्रणयोद्भवो नूनम् ॥ १ ॥

निरुपमगुणगणशाली पुरुषः प्रीतिं तनोति भूयोऽपि।
कोपं प्रणय-प्रभवं गुणवानपनेतुमीशोऽलम् ॥ २ ॥

गाथेयं बत ! लोके प्रथिता नात्येति जातु मर्यादाम्।
चतुरो मानविनोदनरीतिं जानाति मानिन्याः ॥ ३ ॥

भङ्गमुपेतं परितः प्रविशीर्णं दाम मौक्तिकं भूयः।
योजयितुं नाशक्यं गुणसंयोगं विधित्सद्भिः ॥ ४ ॥

हे कृष्ण ! त्वं चतुरो व्यपनय मानं समुन्नतं तस्याः।
विस्मर तस्याः स्खलितं कुरु सन्धानं समेत्याशु ॥ ५ ॥

हृदये तस्याः प्रेम्णोऽङ्कुरः समारोपितस्त्वया योऽसौ।
तरुवर-भावमुपेतः पल्लवपुष्पैर्मनोहरो भाति ॥ ६ ॥

त्वद्गुणगण-पर-वशया प्रेमोन्मादाब्धिलीनया सततम्।
मनसि न जातु कदाचित् कृतं सपत्नीकृतं दुःखम् ॥ ७ ॥

सन्ततसेकसमृद्धो विषतरुरपि नैव युज्यते छेत्तुम्।
किं बत कर्त्तुं शक्या प्रेमद्रुमभङ्गवार्त्तापि ॥ ८ ॥

प्रेमतरुं मा भिन्धि प्राणान्तर्वर्धितं स्वयं सेकात्।
दुर्जन-वचन-विधेयो भूत्वेति त्वामहं याचे ॥ ९ ॥

सर्वेषामियमधुना युवयोः प्रीतिः प्रकाशमुपयाता।
नूनमियं जन्मान्तरसङ्गं युवयोः समाख्याति ॥१०॥

प्राणस्पन्दनमेकं भाति विभक्तं द्विधा शरीराभ्याम्।
माधव ! युवयोस्तस्मात् सम्भावय तां वरारोहाम् ॥११॥

भणति कविर्विद्यापतिरौदासीन्यावलम्बनं त्याज्यम्।
विश्वासः प्रविधेयो वचने महतां सदा लोके ॥१२॥

## ५४

माधव ! निष्ठुर-हृदय ! प्रिया मया ते प्रवासशीलस्य ।
विरहविषण्णा दृष्टा सान्त्वयितुं तां प्रयाहि ननु शीघ्रम् ॥१॥
हिमकरमुदितं दृष्ट्वा नमयति वदनं भयाभिभूता सा ।
पन्थानं पश्यन्ती विलपति बहुशः समुद्विग्ना ॥२॥
सा नयनाञ्जनकलया रचयति यत्नाद्विधुन्तुदालेख्यम् ।
भीतो यस्माच्चन्द्रः प्रभवेत् तां नैव तापयितुम् ॥३॥
मलयसमीरः प्रसरति सोढुं शक्नोतु सा कथं दीना ।
तस्यास्तनुमयमनिशं कवलीकुर्वन् विजृम्भते नितराम् ॥४॥
दारुणविरहव्यथया विगत-प्रायं स्वजीवितं तन्वी ।
यदि जीवामि पुनस्तं द्रक्ष्यामीत्याशया धत्ते ॥५॥
विषमं मलयसमीरं विलयं नेतुं स्पृहातुरातिशयम् ।
सा पवनाशनलुब्धं लिखति नखैः पन्नगं बहुशः ॥६॥
मदनशराहतिभीता सुदती शिवशिवशिवेति निगदन्ती ।
विलुठति वसुधामूले धूलीमलिनं वपुर्दधती ॥७॥
पाणिसरोरुहयुग्मं वक्षोजश्रीफलान्वितं दत्त्वा ।
सा खलु गिरजाकान्तं सम्पूजयति स्वदेहेन ॥८॥
कोकिलकूजनभीता पायसपिण्डं करे समादाय ।
वायसमाकारयति त्रासयितुं कोकिलव्रातम् ॥९॥
करतलकलितकपोलं वदनं विरहार्त्तिपाण्डुरच्छायम् ।
विधुमण्डलमिव दिवसम्लानं शोभां न पुष्णाति ॥१०॥
हृदयं व्यपगतधैर्यं प्रकृतिस्तस्या गता विसंष्ठुलताम् ।
कमलादिव मकरन्दो नयनाभ्यां याति बाष्पाम्भः ॥११॥
अनुदिवसं तनिमानं कलयति तस्याः शरीरलावण्यम् ।
मन्मथपीडाविधुरा सततं तं नाम गृह्णाति ॥१२॥
निन्दति मलयजलेपं भूषणनिकरं परिक्षिपति दिक्षु ।
विधुमपि मनुते दारुणपावकपिण्डं वियोगार्त्ता ॥१३॥
सा बत युवतिरिदानीं विषमां दशमीं दशामनुप्राप्ता ।
तद्वध-पातक-पात्रं भवितासि त्वं न सन्देहः ॥१४॥



## ५५

सहकारः संच्छन्नो मुकुलभरैर्दिक्षु सौरभं प्रसृतम् ।
मधुपो मधुरं गुञ्जति पिकसार्थः पञ्चमं तनुते ॥१॥
मलयजपवनो मन्दं वाति वितन्वन् प्रकाममाधिं मे ।
उन्मादिन्यप्येवं समये कान्तो न सम्प्राप्तः ॥२॥
सखि ! सन्धानोपायं चिन्तय कञ्चिद् यथा स आगच्छेत् ।
विरहिमथनमधुमासे येन मनो निर्वृतं मे स्यात् ॥३॥
पौष्पं कृत्वा बाणं करेऽन्वधावत् स्मरः प्रहर्त्तुं माम् ।
दृष्ट्वा मां शरविद्धां कान्तो मम विद्रुतो दूरम् ॥४॥
वृत्तमिदं सखि ! विदितं पुरा हरेण स्मरो यथा दग्धः ।
मन्ये विरहिवधार्थं स एव गोपान्वये जातः ॥५॥
रे धातर्यदि लप्स्ये त्वां बद्ध्वा सुदृढमन्धकूपेऽहम् ।
सत्वरमतलस्पर्शे विनिःक्षिपेयं न सन्देहः ॥६॥
दुर्विलसितमतिविषमं सखि ! वीक्षस्वास्य दैवहतकस्य ।
यस्याः पतिरविदग्धः किमिति विधत्ते सुरूपां ताम् ॥७॥
अन्यासां खलु रूपं जनयति तासां प्रियेषु सम्मोदम् ।
दैवहताया मम ननु रूपं पुष्णाति वैयर्थ्यम् ॥८॥
दिवसे दिवसेऽधिकतरमाविर्भावं प्रयाति मे दैन्यम् ।
दुर्वहविरहशिलातल-पीडन-दुःखं घनीभवति ॥९॥



## ५६

सखि ! निर्भरपरिरम्भणसौख्यं लब्धुं मया कदाचिदपि ।
वक्षसि वसनं चन्दन-लेपो हारश्च नाधारि ॥१॥
अधुना बत तत्रैव प्राप्तं व्यवधानमावयोर्मध्ये ।
विहितं दुस्तरविषमैः सरित्प्रवाहैर्गिरिव्रातैः ॥२॥
येन वितीर्णं लब्ध्वा स्नेहं मानोन्नतिञ्च सौख्यञ्च ।
गर्वात् किमपि न गणितं तदभावे को न किं वक्ति ॥३॥
कान्तवियोगप्रभवा हृन्मर्मणि मेऽद्य वेदना विषमा ।
प्रियविश्लेषे जाते को लाभो जीवितादस्मात् ॥४॥

मम भाले लिपिकाले जातो धातुर्लिपिभ्रमो नूनम् ।
तेनेदृशमापन्नं प्रियो न मे दोषमावहति ॥५॥
अन्यस्यामनुरक्तः कान्तो देशान्तरं गतो मन्ये ।
तेन विना हृत्पञ्जरमेतन्मे जर्जरं जातम् ॥६॥
कथयति विद्यापतिकविरयि निरुपमरूपशालिनि त्वं मे ।
शृणु वचनं ननु धैर्यात् प्राप्तव्यस्ते मुरारातिः ॥७॥

५७

सखि ! मन जीवितनाथो निवसति देशे सुदूरस्थे ।
कोऽपि कुशलसन्देशं कथयति नाद्यापि मामेत्य ॥१॥
सखि ! मम नैव हि निन्द्यः कान्तो गुणराशिसम्भृतः कामम् ।
अहमेका हतभागा नन्वयमात्मैव मे निन्द्यः ॥२॥
विस्मृतिमलमुपयाता प्रियहृदये सा चिरन्तनी प्रीतिः ।
विपरीते बत ! धातरि विपरीतं जायते सर्वम् ॥३॥
मर्मणि या खलु विषमा पीडा मामालि ! बाधते सततम् ।
मर्मैव हि तां वेत्तुं प्रभवति नास्त्यत्र सन्देहः ॥४॥
गाथेयं बत ! लोके प्रथिता तथ्यं बिभर्त्ति ननु जाने ।
परकीयं खलु दुःखं वेत्तुं शक्नोति नैवान्यः ॥५॥
कथयति विद्यापतिकविरियमतिदुःखेन पीड्यते रमणी ।
किं विदधातु विधातरि वामे कामो न पूर्णोऽस्याः ॥६॥

५८

सखि ! मधुपुरमुपयातः प्राणपतिर्मे विहाय मां गेहे ।
कुलबालाहं जाता विपथक्षिप्तेव मालतीमाला ॥१॥
किं कथयसि किं पृच्छसि सखि ! मम चित्तं नितान्तमुद्विग्नम् ।
हरिविरहे बत ! नेयं कथमिव नक्तन्दिनं नित्यम् ॥२॥
निद्रा लोचनयुगलं विहाय कामं विनिर्गता दूरम् ।
वचनविलासं हित्वा हासोऽप्यस्तङ्गतः शीघ्रम् ॥३॥

सौभाग्यस्य विलासः सखि ! सौख्यस्य प्रकाममुल्लासः ।
कान्तेनैव समं बत ! हित्वा मां प्रस्थितोऽशेषः ॥४॥
हरिविरहादुत्पन्नं प्राणोद्वेगावहं परं विषमम् ।
केवलमिदमनुषक्तं दुःखं जागर्त्यहोरात्रम् ॥५॥
कथयति विद्यापतिकविरयि वरवामे शृणुष्व मे सूक्तिम् ।
द्वित्रा एव हि दिवसा भवन्ति कष्टाः सतां जगति ॥६॥

५६

सरसिजराजिविरहितं सरो न कान्तिं तनोति रमणीयाम् ।
सरसिजमपि परिहीणं सरसा शोभां न पुष्णाति ॥१॥
तरणिकिरणसंस्पर्शाद्रहितं कमलं न कान्तिमभ्येति ।
सौरभसम्पत्सत्त्वेऽप्यविकासात् पत्रचक्रस्य ॥२॥
तनुरपि यौवनसम्पद्रहिता नैवावभासते रुचिरा ।
लोचनमोहन-कौशलवन्ध्याभिज्ञा न कामस्य ॥३॥
यौवनमपि नो कान्ति तनुतेऽलब्ध्वा तनुं सुरूपाढ्याम् ।
उभयमिदं खलु वन्ध्यं चिराय कान्ते विदेशस्थे ॥४॥
हे सखि ! मम परिपन्थी जातो नितरां बिधिर्दयाहीनः ।
प्रेयसि परदेशस्थे विवर्धते मान्मथी पीडा ॥५॥
एष्याम्यनतिविलम्बं कान्ते ! चित्ते कुरुष्व मा चिन्ताम् ।
इत्युक्त्वा सखि ! यातः कान्तो मां नैव संस्मरति ॥६॥
प्रतिबोधय तं गत्वा सखि ! कान्तं मे करोम्यहं याच्ञाम् ।
प्रत्यागमनविषयकं स्वयमुक्तं तेन विस्मृतं वचनम् ॥७॥
सखि ! परितः प्रविलोकय भृङ्गकुलं भ्रमति पुष्पगुच्छेषु ।
रमते पुष्पे पुष्पे पीत्वा पुष्पासवं कामम् ॥८॥
वाति समीरो मन्दं पिककुलमनिशं कुहूरवं तनुते ।
श्रावं श्रावं रमणी कथमिव जीवेद् वियोगार्त्ता ॥९॥
प्रीतिं प्रियतमहृदये विलसन्तीं मद्गतां चिरं ध्यात्वा ।
अहमासं विश्वस्ता यास्यति नेयं कदापि मालिन्यम् ॥१०॥
सुजनोदीरितवचने व्यभिचारो नैव दृश्यते जगति ।
किं प्रविलोलतरङ्गो भिनत्ति वार्धिः स्वमर्यादाम् ॥११॥

६०

प्रियविरहे मुग्धाक्षी म्लानतनुः सा वियोगिनी खिन्ना ।
जीवितधारणमतिशयविषमं शक्ता कथं कर्त्तुम् ॥१॥
अवधिर्निश्चितपूर्वोऽतीतोऽद्याप्येति माधवो नैव ।
नियतमियं विरहार्त्ता पास्यति विषमद्य नैराश्यात् ॥२॥
शिशिरकरोऽयं नितरां रविरिव दाहव्यथां भृशं तनुते ।
वपुरञ्चत्यवसादं स्नेहो यातः परां सीमाम् ॥३॥
जागरखिन्नाया बत दुस्तरतां याति यामिनीयामः ।
एकोऽप्यनेकयुगवत् सुतरां दीर्घावधिः शश्वत् ॥४॥
जातायां सन्ध्यायामुदयं याते सुधाकिरे शशिनि ।
वसुधायां हरिणाक्षी निपतति मूर्च्छापराधीना ॥५॥
कथयति विद्यापतिकविरुग्रबलो मन्मथो जगद्-विदितः ।
कोऽपि जनो नानुभवतु पीडां विषमां मनोजस्य ॥६॥

●

६१

नवयौवनमिदमुपनतमतिविषमो भाति मन्मथोत्तापः ।
मधुरजनीयं तन्वी गृहलोकोऽद्यापि जागरितः ॥१॥
सखि ! कृत्वा सा समयं साकं कान्तेन सङ्गमस्याद्य ।
लज्जायन्त्रितचरणा संशयपदवीमनुप्राप्ता ॥२॥
नलिनीदलगतजलमिव चित्तं नैवावलम्बते स्थिरताम् ।
गेहे क्षणं-क्षणं बहिरेवं दोलायते तन्वी ॥३॥
वामो मयि विधिरिति सा कथयति गगने निबद्धनयनान्ता ।
किमु विधुरुदयं यातो लिम्पञ्ज्योत्स्नाभरैर्भुवनम् ॥४॥
सुप्तोत्थिता क्षणं सा भूयो भूयः प्रकम्पितस्वान्ता ।
शङ्कालङ्घितमनसा पश्यत्यनिशं नभोभागम् ॥५॥

प्रियसङ्केतनिकेतं द्रुतमुपगन्तुं प्रवेपमानाङ्गी ।
वाञ्छति किन्तु न गच्छति तन्वी कौलीनसन्त्रस्ता ॥६॥
कश्चित् पथि परिचिनुयान्मामिति दधती भयं जनाद् भूयः ।
मार्गे चरणनिरोधकपङ्कातङ्कात् समुद्विग्ना ॥७॥
नवयुवती किं कुर्यात् प्रस्थातुं साभिवाञ्छति व्यग्रा ।
ताम्यति कातरनयना जाल-निबद्धा कुरङ्गीव ॥८॥
कोऽस्मिन् भुवने पीडां तस्या जानाति मानसीं तीव्राम् ।
अविरत-विरह-प्रगुणितमन्मथ-सन्ताप-सम्भिन्नाम् ॥९॥
अलिकुलगुञ्जितकुञ्जे प्रतीक्षणासक्तमानसं कृष्णम् ।
कथमुपगच्छेयमिति स्मरशरभिन्ना विभावयति ॥१०॥
रोदनरूषितनयना विगलन्नेत्रोदबिन्दुविसरार्द्रम् ।
मुखमवगुण्ठनलीनं दधती रजनीं नयत्यक्ष्णोः ॥११॥
भणति कविर्विद्यापतिरियमापतिता करोतु किं विषमे ।
किमु गुरुवर्गो निद्रां यातो वा नेति चिन्तयति ॥१२॥

●

६२

वात्यानाद-द्विगुणित-घनगर्जित-भीषणं नभो जातम् ।
धारासारा वृष्टिस्तरुगुल्मेषु श्रुतिं याति ॥१॥
गगनादुच्छलितेऽस्मिन् वसुधामाप्लाव्य निर्भरं वहति ।
तरले तमसः स्तोमे भाति निमग्नं जगत् सर्वम् ॥२॥
पथि विपथे वा भेदः सम्प्रति नैवावभासते कश्चित् ।
कालेऽस्मिन् बत ! विषमे कथमाशा मे भवेत् पूर्णा ॥३॥
अस्मिन्नन्धङ्करणे काले विद्धं व्यधान्मम स्वान्तम् ।
पापः पञ्चशरोऽसौ कुलकन्याधैर्यविध्वंसी ॥४॥
यौवनवन्धुरवपुरिदमच्युतचरणार्चनापात्रम् ।
कृत्वानन्दमनुत्तरमाप्तुं कृष्णान्तिकं चलिता ॥५॥
अविरलवृष्टिक्लिन्नं विलुलितधम्मिल्लभारसंसक्तम् ।
स्तिमितनिषक्तक्षौमं पृथवेपथुमद्वपुर्दधती ॥६॥

कण्टकिपादपनिचिते दुरुत्तरे गाढकर्दमप्रोते ।
कष्टे पथि गच्छन्ती मन्मथसाह्यं समासाद्य ॥७॥
सलिलोच्छूनां सरितं तुङ्गतरङ्गोच्छ्रुरां महायामाम् ।
उन्मदवेगोदग्रां तीर्त्वाऽगच्छं सुखाकृष्टा ॥८॥
अद्याहं बत ! यादृशमन्वभवं मर्मकृन्तनं दुःखम् ।
कस्मै सखि ! तद् वच्मि स्वान्तं मे केवलं वेत्ति ॥९॥
मन्ये प्राक्तनजन्मनि सञ्चितमासीदतीव मे पुण्यम् ।
यस्य महिम्ना सम्प्रति सञ्जाता प्राणरक्षा मे ॥१०॥
किन्तु प्रियमुखचन्द्रो मनसि निखातश्चिराय कामेन ।
साक्षात्कृतो यदासीत्तदा व्यथासीत् कथाशेषा ॥११॥
अगणितजन्मान्तरतः स्वान्तं विरहव्यथापरामृष्टम् ।
तस्याश्लेषसुधार्णव - कल्लोलैर्निर्वृतं जातम् ॥१२॥
कथयति विद्यापतिकविरानन्दोऽयं विराजतेऽनुपमः ।
पुण्यातिशयमहिम्नानन्दमिमं वेत्ति धन्यैव ॥१३॥

## ६३

अधिमधुरजनि निकुञ्जे साकं कृष्णेन सङ्गता निभृतम् ।
मदनसपर्यासक्ता सरसस्तीरेऽभवं रम्ये ॥१॥
निधुवननिस्सहदेहा तन्द्रावैवश्यमागमं पश्चात् ।
नैशप्रसूनसौरभमधुरे शीतेऽनिले वाति ॥२॥
प्रसरदरुणरुचिरुचिरा प्राची वसनं व्यपास्य तामिस्रम् ।
कुङ्कुमरञ्जितवदना गौराङ्गीवोदिता युवती ॥३॥
निद्राविजडितनयनां कुञ्जगतां हन्त ! मामनापृच्छ्य ।
अत्रान्तरे प्रयातो निभृतं सखि ! माधवस्तूष्णीम् ॥४॥
ज्ञातमिदं स्याद्यदि सखि ! तस्मै प्रादास्यमुन्मदाश्लेषम् ।
तटपरिरम्भण-संरभस-सागर-कल्लोल-मालेव ॥५॥
यद्यत् तदा व्यधास्यं तत्तदिदानीं मुहुर्मुहुः स्फुरति ।
अनुरागो हि निरूढः सम्प्रति विरहव्यथां तनुते ॥६॥

६४

दुःखमहार्णवपारं सखि ! नहि पश्यामि दुःसहोद्वेगा ।
नवधनमेदुरभाद्रे प्रियहीनं मे गृहं शून्यम् ॥१॥
संवृतगगनाभोगो घननिर्घोषो बलाहक-व्यूहः ।
आप्लावितभूवलयो धारासाराभिवर्षणं कुरुते ॥२॥
कान्तः सखि ! प्रवासी कामो वामः सुदारुणो नितराम् ।
हन्ति प्रखरैरिषुभिर्गाढं मां चिन्तया दीनाम् ॥३॥
कुलिशपरश्शतपातप्रभवैर्निनदैः प्रमोदपरिपूर्णम् ।
नृत्यति शिखिकुलमभितः केकापरमुन्मदं रभसात् ॥४॥
दर्दुरकुलमतिमुदितं वसुधामासाद्य वारिपरिपूर्णम् ।
रटति स्पर्धाबन्धैः श्रुत्वा तद् भिद्यते स्वान्तम् ॥५॥
सघनतमोभरमग्नं मेघैः सघनैः प्रकाममाच्छन्नम् ।
झञ्झावाताध्मातं जातं दिङ्मण्डलं कामम् ॥६॥
चञ्चति नश्यति चञ्चति खेलति गगने तडिल्लता चपला ।
क्षणदृष्टैरुद्योतैर्भयदेयं तामसी रात्रिः ॥७॥
कालेऽस्मिन्नतिविषमे कथमिव नेयं मया दिवारात्रम् ।
हरिमन्तरेण हे सखि ! सुदुर्लभं प्राणसर्वस्वम् ॥८॥

●

६५

तव वचने विश्वासं विधाम शय्या मया सुविन्यस्ता ।
विविधैः सौरभमधुरैरलङ्कृता सा मुदा कुसुमैः ॥१॥
वासन्तीयं रजनी पार्विकचन्द्रोच्छ्वल-प्रभाश्लिष्टा ।
उद्दीपन-साम्राज्यं प्राज्यं राजत्यनङ्गस्य ॥२॥
कुत्र न धावत्येतत् हृदयं भृशमुत्सुकं मम प्रसभम् ।
दिक्षु भ्रामं भ्रामं निवर्त्तते दृष्टिरुद्विग्ना ॥३॥
एवं श्रुत्वा वचनं राधायास्तत्सखी समुद्विग्ना ।
गत्वा माधवसविधे प्राञ्जलिरूचे वचो युक्तम् ॥४॥
माधव ! तव सन्दर्शनतृष्णावेशात् तयाखिला मधुरा ।
रजनिर्नीता जागरपरवशया हन्त ! कामिन्या ॥५॥

सज्जनसुयशोऽसुलभं लब्ध्वा कोपस्य वश्यतां मा गाः ।
कैतवचर्या महतां दोषः सुमहान् न सा युक्ता ॥६॥
भणति कविर्विद्यापतिरेतद् वचनं बिभर्त्ति बहु मूल्यम् ।
कुलमर्यादाभरणं सत्यव्रतपालनं कथितम् ॥७॥

●

६६

निरुपमगौरिमशालिनि ! विधेहि चैलाञ्चलावृतं वदनम् ।
वृत्तमिदं सुप्रथितं राज्येऽस्मिंश्चोरितश्चन्द्रः ॥१॥
राजभटः प्रविचरति प्रतिगृहमिन्दोर्विमार्गणे व्यग्रः ।
दोषस्त्वयि निपतिष्यति विहितं चौर्यं त्वयैवेन्दोः ॥२॥
कुत्र निधास्यसि चौरं येनापहृतः प्रभोज्ज्वलश्चन्द्रः ।
यत्रैवासौ स्थास्यति तत्रैवोदेष्यति ज्योत्स्ना ॥३॥
मा हस दृष्ट्वा दशनालोक-प्रोद्भिन्नकान्तिविप्रसरम् ।
धनिनो वणिजश्चामी ब्रूयुर्धनमेतदस्माकम् ॥४॥
अधरं दशन – द्युतिचय-विच्छुरितं धास्यति प्रभालास्यम् ।
सिन्दूरस्थित—मौक्तिक-पङ्क्तीनां रम्यरूपाणाम् ॥५॥
भणति कविर्विद्यापतिरयि मुग्धे ! नास्ति कारणं भीतेः ।
त्वन्मुखतुलनामर्हंतु कथमेष कलङ्कितश्चन्द्रः ॥६॥

●

६७

राहोर्भयेन चन्द्रः शङ्काकुलमानसो भृशं दीनः ।
मन्मुखमेतत्तु पुनः सततं निश्शङ्कमेवास्ते ॥१॥
दूषणमपरं विलसति चन्द्रे शक्यं न तद्विनिह्नोतुम् ।
चन्द्रः कलङ्कमलिनो न मुखे मम जातु मालिन्यम् ॥२॥
सत्यप्येवं भेदे चन्द्रस्तुल्यो ममाननेनेति ।
कथनमयुक्तं हेम्ना काकस्यास्तीह किं साम्यम् ॥३॥
सखि ! कान्तो मम नितरां सम्मुग्धोऽतीव वच्मि किमहं तम् ।
कथयति वारम्वारं वदनन्ते तन्वि ! विधुसदृशम् ॥४॥

चन्द्रो नैव कटाक्षं प्रेरयितुं जातु कौशलं धत्ते।
अतएव कामिनीभिर्भृत्यत्वं प्रापितो दीनः ॥५॥
विलसति सुधा सुधांशौ मुखकमले मे विभाति हासश्रीः।
एतावानभिलक्ष्यस्तुलनाभासोऽनयोः कश्चित् ॥६॥
भणति कविर्विद्यापतिरतिशयतत्वं पुनर्जगद्विदितम्।
मदनोन्मादनरूपं विलक्षणं कामिनीवदने ॥७॥

●

६८

कोमलकरतललीनो मुखचन्द्रो भाति विरहविधुरायाः।
किसलयसङ्गतमभिनवसरसिजमिव शोणसच्छायम् ॥१॥
नक्तन्दिवमनुवेलं विगलति नयनाम्बुसन्ततिस्तस्याः।
मौक्तिकदाम निगीर्णं खञ्जनविहगः समुद्वमति ॥२॥
किं प्रविधेयं किं वा तयाभिधेयं न वेत्ति सा किञ्चित्।
विमुखः कृष्णो जातो विनैव केनापि दोषेण ॥३॥
विरहविषण्णाया बत ताम्यति तन्वी तनुः सदा नितराम्।
कुसुमं म्लानिमुपेतं सौरभमद्यापि नो त्यजति ॥४॥
चिन्तामग्नायाः खलु संशयपदवीमुपागताः प्राणाः।
व्यथयति तथाप्यनङ्गो विध्यन् बाणैः सदा विषमैः ॥५॥
भणति कविर्विद्यापतिराकर्णय मे वराङ्गने वाचम्।
कुरु धैर्यस्य परिग्रहमेष्यति कृष्णो न सन्देहः ॥६॥

●

६९

दृष्टिर्धावं धावं फेनाध्माता हरिनं सम्प्राप्तः।
आशातन्तुनिबद्धः शिव शिव जीवो न निस्सरति ॥१॥
मनसि भवत्युड्डीय व्रजामि यत्र प्रियो भवेदधुना।
प्रेमस्पर्शमणिं तं वक्षसि संश्लेषयेयमहम् ॥२॥
सन्ततजागरतान्ता दृष्टिर्मुद्रां गता निमेषार्धम्।
स्वप्ने लब्ध्वा कान्तं सङ्गमसौख्ये निमग्नाहम् ॥३॥

बिभ्राणः सखि ! वैरं सहजं मयि नन्वसौ विधिःक्रूरः ।
निद्रां विधाय भग्नामहृन्मे सौख्यसर्वस्वम् ॥४॥
विद्यापतिना गीतं कुरुष्व धैर्यावमम्ब्वनं धन्ये ।
सङ्गत्याशु विधास्यति मनोरथं ते प्रियः पूर्णम् ॥५॥



## ७०

आशालता मयोप्ता हृदये नयनाम्बुधारया सिक्त्वा ।
फलमस्याः परिपुष्टं सम्प्रति नैवाञ्चले माति ॥१॥
दृष्ट्वा मम तनुलतिकामविकसितां वयसि शैशवोपान्ते ।
कान्तो गतः प्रवासं मामुपभोगासहाँ ज्ञात्वा ॥२॥
अनुदिनमुदयद्—यौवनफलमिदमधुना विराजते स्फीतम् ।
नैवेदानीमपि मे कान्तो मामीदृशीं वेत्ति ॥३॥
सर्वासामपि हे सखि ! ये प्रेयांसः स्थिताः प्रवासेषु ।
ते ननु समनुप्राप्ताः स्मृत्वा स्नेहं मनोरूढम् ॥४॥
सखि ! किं वच्मि मदीयः पतिरेवं निर्दयो यदधुनापि ।
चित्ते तस्य मनागपि मत्स्नेहो नोदयं लभते ॥५॥
विद्यापतिना गीतं कान्तस्ते सुमुखि नूनमागन्ता ।
मोदभरोच्छलचित्ता सभाजयैनं गृहे प्राप्तम् ॥६॥



## ७१

प्रेमपत्रमुपनेष्यति कः सखि मम कान्तसन्निधौ निभृतम् ।
मासे नभसि प्राप्ते दुःखमसह्यं न हृत् सहते ॥१॥
एकाकिन्यहमधुना स्थातुमशक्ता प्रियं विना गेहे ।
सखि ! पर-दुःखं दारुणमेतत् प्रत्येति को भुवने ॥२॥
हृत्वा सखि ! मम हृदयं हरिरपयातो वहामि शून्यत्वम् ।
हित्वा गोकुलमधुना कृष्णो मथुरारुचिर्जातः ॥३॥

नो जानाम्यहमेतत् कस्मात्तेनायशोऽर्जनं क्रियते।
मथुरामधिवसता सखि! नवयुवतीसङ्गलुब्धेन ॥४॥
विद्यापतिना गीतं हृदये सखि! धेहि सङ्गमाकाङ्क्षाम्।
एष्यत्यस्मिन् नूनं कार्त्तिकमासि प्रियो गेहम् ॥५॥

●

## ७२

केन गुणेन प्रेयान् पराङ्गनाया बशम्वदो जातः।
ज्ञातौ सखि! गुणदोषौ तस्येदानीं मया सम्यक् ॥१॥
सखि! तं विना ममेदं स्वान्तं मथ्नाति मन्मथो नितराम्।
दहति शरीरं सततं रजनीषु ज्योत्स्नया चन्द्रः ॥२॥
कथयतु पिशुनजनो मे तदवगुणानां शतं शतं सततम्।
तत्तुल्यो नैवान्यः सखि! कश्चिद् दृश्यते लोके ॥३॥
मनसि निरूढा प्रीतिः सखि! शक्या किं कदापि विस्मर्तुम्।
यत्नशतेऽपि कृते किं नश्यति रेखा शिलापट्टे ॥४॥
कटुकं वहुशः प्रवदति मत्प्र मुर्मुहिश्य दुर्जनो लोकः।
श्रुत्वापीदं सर्वं न मनो मे तं परित्यजति ॥५॥
सखि! पश्येमं हरिणं यः कृतवसतिर्विभाति विधुबिम्बे।
राहुपराभवदुःखं लब्ध्वापि स तं नहि त्यजति ॥६॥
तरणि. किरणैरुग्रैः कियदपि सलिलं विशोषयत्वनिशम्।
मुञ्चति नैव हि पङ्कं सरोजिनी जात्वहो प्रीतिः ॥७॥
यः खलु जनोऽनुरक्तो यस्मिन् सहजानुरागबन्धेन।
किं कुर्यात् सखि! वद मां वक्रो भूत्वा विधिस्तस्य ॥८॥

●

## ७३

यं समयं सखि! कृत्वा गतः प्रवासं प्रियोऽवधिस्तस्य।
विगतस्ततः कियन्तो नीता दिवसा व्यथाविष्टाः ॥१॥
अधुना षोडशवर्षा प्रस्फुटलावण्यशालिनी कम्रा।
एतावद्भिर्दिवसैः सञ्जाता यौवनोद्दीप्ता ॥१॥

सखि ! मां सम्भावयितुं दर्शनतृष्णावशम्वदां कान्ताम् ।
मम नाद्यापि विदेशात् प्राणेशो गेहमायाति ॥३॥
उपचितकामोद्वेगान्मनसा पारिप्लवेन मन्येऽहम् ।
पातिव्रत्यसुरक्षा नूनं सन्देहमापन्ना ॥४॥
दिवसे दिवसकरोऽयं रात्रौ शीतांशुमण्डलं शुभ्रम् ।
सखि ! न मनामपि सरसं चन्दनमपि रोचते मह्यम् ॥५॥
भणति कविर्विद्यापतिरयि गुणवति मा भजस्व नैराश्यम् ।
कान्तः कृष्णो न चिरादेष्यति धैर्यं निधेहि त्वम् ॥६॥

●

७४

हे सखि ! विततः कालो विगतो विरहे सुदुर्वहो नितराम् ।
जीवनमखिलं तिक्तं विरहेणानेन संविहितम् ॥१॥
नास्त्यधुना मे काम्यं जीवितमेतत् सुदुर्धरं व्यथया ।
गरलमहं ननु पीत्वा प्राणांस्त्यक्ष्यामि हतभागा ॥२॥
सुरसरिदमलतटे त्वं रचय चितामालि ! पावने शीघ्रम् ।
परजन्मनि बत ! सङ्गमकामाविष्टा ज्वलाम्यत्र ॥३॥
विधिनानेन हि कान्तः सुलभो जन्मान्तरे भावी ।
अनुकूलः खलु धाता भवेत् तदानीं न सन्देहः ॥४॥
किं सखि ! पत्रे लेख्यं वाचिकमपि वा मया किमाख्येयम् ।
शममेष्यति हि विवादो मयि जातायां दशामन्त्याम् ॥५॥
अथवाहं सखि ! वच्मि त्वां कान्तो मे स्फुटं समाख्येयः ।
पुरुषस्यैषा प्रकृतिर्यद् विस्मरतीह स स्वकृतम् ॥६॥
पुरुषैरिदमवधेयं सदानुरागप्रपञ्चनोद्युक्तैः ।
अनुरागो हि विधेयः परीक्ष्य नारीं दशा परया ॥७॥
पञ्चशरे दुर्वारे विध्यति मर्माणि मार्गणैर्विषमैः ।
यत्नैरपि नो शक्या कथमपि बुद्धिः स्थिरीकर्त्तुम् ॥८॥
तं सखि ! मद्वचनात् त्वं ब्रूया एवं यथा स मां स्मृत्वा ।
क्वचिदपि पुण्ये तीर्थे स्नात्वा तोयाञ्जलिं दद्यात् ॥९॥
कथयति विद्यापतिकविरयि ते विरहो विराममागन्ता ।
मन्मथतीर्थे कृष्णस्तर्पयिता त्वां यथाकामम् ॥१०॥

●

## ७५

मन्त्रविहीने भूयः प्रादुर्भूता विपद्द्रुमे सघना ।
अभिनवपल्लवसन्ततिरातनुते मर्मपीडां मे ॥१॥
सखि ! विरहिण्या नयनद्वन्द्वे विधिना निवेशितो नूनम् ।
अविरलधारासारो वर्षाकालश्चिरस्थायी ॥२॥
चेतसि हे सखि ! सततं प्रवर्धमानोऽनुभूयते कामम् ।
विरहविलोलज्वालाविषमः कामानलोत्तापः ॥३॥
तापोऽयं सखि ! माधव-सङ्गमवर्जं न लप्स्यते शान्तिम् ।
हारैर्मलयजपङ्कैर्नलिनी-पत्रैर्मृणालैश्च ॥४॥
चातकविहगो दिशि दिशि रटति प्रियनाम सन्ततं तारम् ।
अनुपलमेति श्रुतिपथमुद्दीपयतीदमाधिं मे ॥५॥
मधुरं चातककूजितमधुना परुषं प्रतीयते विरहे ।
विपदि हितोऽप्यहितः स्यादेषा विषमा जगद्रीतिः ॥६॥
विद्यापतिना गीतं दुःखमिदं तन्वि ! नार्हति स्थातुम् ।
कृष्णं नटवर-वेषं प्राप्स्यसि नैवात्र सन्देहः ॥७॥

## ७६

मधुकरवर ! निजदेशं प्रत्यागन्तुं प्रियो ममाख्येयः ।
दयितामत्रागत्यालोक्य पुनस्तत्र गन्तव्यम् ॥१॥
शैशवमपगतमादौ यौवनमधुना विभूषयति गात्रम् ।
तदपि त्वरितं यास्यति मम वाञ्छा नैव पूर्णा स्यात् ॥२॥
प्रतिदिवसं तनुरेषा तनुतामभ्येति चिन्तया परया ।
मृदुनलिनीदलशयनादपि तापो नैव निर्वाति ॥३॥
शीतलकिरणप्रथितो यो विधुरभवत् पुरा मनोहारी ।
सम्प्रत्यनलप्रतिमः स खलु तनुं तापयत्यधिकम् ॥४॥
सततं मथ्नन् मानसमधुना पुष्णाति मन्मथोऽभिख्याम् ।
दुस्सह-दारुण-दारण-पीडा हृदयं विमूर्च्छयति ॥५॥
निजदेशं चिरकालाद्विहाय कान्तः प्रवासमुपयातः ।
शल्यमिदं हतयौवनमधुना तस्माद्विना जातम् ॥६॥

७७

मलयजलेपो जातो विषमशरत्वं मनोजहतकस्य ।
भूषणमखिलं सम्प्रति देहे भारायतेऽतितराम् ॥१॥
स्वप्नेऽपि क्षणमात्रं नायातोऽसौ हृदन्तरातिथिताम् ।
धृतगोवर्धनशैलो गोकुलवसतिर्मनोहारी ॥२॥
फुल्लकदम्बद्रुमतलमधितिष्ठन्ती विषादिनी सततम् ।
एकाकिन्यबला सा पश्यति कृष्णस्य पन्थानम् ॥३॥
हृदयं हरिविरहानल-दुःसहदाहेन दग्धमतिमृदुलम् ।
चन्द्रमुखी न स्थास्यति कस्माद् वधपातकं निपतेत् ॥५॥
विद्यापतिरभिधत्ते गुणवति धन्ये शृणुष्व यद्वचनम् ।
हरिरद्यैवागन्ता गोकुलमचिरं गृहं याहि ॥६॥

७८

आगन्ता सखि कृष्णः कथयेदेवं वचः प्रियं को माम् ।
नो जाने विरहाब्धिः कथमिव शक्यः समुत्तर्त्तुम् ॥१॥
दिवसः कथमपि नीतः क्रमशो मासोऽथ हायनो दीर्घः ।
गणनापरवशया सखि नीत्वा वर्षाणि जीवनं गमितम् ॥२॥
मज्जति मम सखि चित्तं निरवधिनैराश्यभावनाम्भोधौ ।
अधुना धैर्यविधुरया जीवितवाञ्छा मया त्यक्ता ॥३॥
पद्मं यदि जायेत प्रदग्धमिन्दोः करैः सुधागर्भैः ।
मधुमासेन विधेयं पश्चात् किं नैव जानामि ॥४॥
तपनोत्तापाश्लेषात् सम्प्लुष्टश्चेन्नवाङ्कुरो जातः ।
किं : कार्यं नवनीरदवृन्दैर्जलभार-सन्नम्रैः ॥५॥
कथयति विद्यापतिरयि मा कुरु नैराश्यकातरं चित्तम् ।
हृदयानन्दन-हेतुर्न चिरात् कृष्णः समागन्ता ॥७॥

७९

हे सखि ! दूरं देशं यातः कान्तो निवर्त्तते नैव ।
दत्त्वा मे प्राभृतकं यौवनशल्यं व्यथा-हेतुम् ॥१॥
आषाढोऽयं मासः सघनोद्धुर-मेघमण्डलो भाति ।
प्रियतम-विरहाक्रान्तं सीदति सखि मे मनो नितराम् ॥२॥

क्वासौ निष्ठुर-हृदयो देशश्चास्ते स कीदृशो ब्रूहि।
नेपथ्यं योगिन्या धृत्वा यास्यामि तं देशम् ॥३॥

जातः श्रावणमासो वृष्टिः सततं प्रवर्त्तते मुखरा।
गाढे तमसि निमग्नाः पन्थानो भान्ति नैवाद्य ॥४॥

विद्युद्रेखा दिशि दिशि दृष्टिपथं यान्त्यनुक्षणं कुटिलाः।
ताः सखि ! परिपश्यन्त्याः संशयिता मे बत ! प्राणाः ॥५॥

मासोऽयं सखि ! भाद्रस्ताण्डवरभसोद्धुराधुना वृष्टिः।
प्रतिदिशमाकर्ण्यन्ते केकारवदर्दुरारावाः ॥६॥

बधिरीकृतदिक्चक्रैर्विद्युत्पातैश्चमत्कृता भूयः।
पुण्यवती बत ! युवतिः शेते कान्तोरसि श्लिष्टा ॥७॥

प्राप्तश्चाश्विनमासो वृष्टिर्विरता दिशः प्रकाशन्ते।
कान्तागमनमनोरथवल्ली पत्रावलीं तनुते ॥८॥

निर्मलसलिलाधारे क्रीडन्ति मुदा रथाङ्गमिथुनानि।
वर्षाविगम-प्रमुदित-चित्तान्यथ हंसचक्राणि ॥९॥

जातः कार्त्तिक-मासो वाताः कल्हारशीतला वान्ति।
शेफाली सखि ! विहसति सायन्तनमारुताश्लिष्टा ॥१०॥

हे सखि ! किं कथयामि क्रूरः कान्तो दिगन्तरेऽद्यापि।
दर्शं दर्शं सरणिं प्रियस्य जाता निराशाहम् ॥११॥

आयाता सुखरात्रिर्गेहे गेहे विभाति दीपश्रीः।
दग्धं बत ! मम हृदयं विरहध्वान्तेन सम्मूढम् ॥१२॥

मार्गोऽयं सखि ! मासः प्राप्तो विरहार्त्तकामिनीकालः।
अद्यापि नैव कान्तो निष्ठुर-चित्तः समायातः ॥१३॥

दृढपरिरम्भणतृष्णाज्वालाकवलीकृतेन गात्रेण।
गमयाम्यनिशं रजनीः प्रजागराताम्रनयनाभ्याम् ॥१४॥

नायातः सखि ! कान्तोऽद्यापि स नायातु प्रस्तरप्रतिमः।
तद्विरहोद्भववह्निर्धक्ष्यति न चिरान्मम प्राणान् ॥१५॥

सम्प्रति पौषः प्राप्तो दिवसः कृशताङ्गतस्तमी दैर्घ्यम्।
कान्ते प्रवासलीने म्लानिमुपेता तनुच्छाया ॥१६॥

पश्याम्यनिशं दिशि दिशि कान्तागमलालसापराधीना ।
पश्यन्त्या मे शून्या दिशो मनो रोदनं कुरुते ॥१७॥
दारुण-विरहज्वालाविचटच्चित्तं वहामि हतभागा ।
नान्या काचिदपीमामनुभूयाद् यातनां विषमाम् ॥१८॥
माघोऽयं सम्प्राप्तः प्रपतति हिमसंहतिर्घना दिक्षु ।
चित्तं कुहूच्छन्नं निरन्तरं शून्यतां याति ॥१९॥
मग्नांशुकसुव्यक्तं स्तनयुग्मं हारदीप्तमुत्तुङ्गम् ।
व्यथयति शल्यमिवेदं हृदयं कामं प्रियानाप्त्या ॥२०॥
धन्यास्ताः कामिन्यो याः कान्ताश्लेषपीडितोरस्काः ।
हिमयामिन्या दैर्घ्यं नैव कदाचिद्विजानन्ति ॥२१॥
विपरीतं पुनरखिलं मम सखि ! दुर्दैववाञ्छया जातम् ।
सततं जृम्भारम्भैर्गमयामि विभावरीर्दीना ॥२२॥
प्राप्तः फाल्गुनमासः प्रज्वलितं भाति किंशुकैर्विपिनम् ।
मर्दलनादोच्छलितः प्रवर्त्तते रासकारावः ॥२३॥
भवनोपवनप्रान्ते वृतिरन्ध्रासक्तलोचना स्पृहया ।
प्रियतमसरणिमनलसा दिवसं गमयामि पश्यन्ती ॥२४॥
मधुमासस्य सनातनवैतालिकतामुपागतो मत्तः ।
पिकसार्थः सखि ! पञ्चममधुनाविरतं प्रपञ्चयति ॥२५॥
नक्तन्दिवमनुविशति श्रुतिसरणिं मे कुहूरवो विषमः ।
मदनानलतप्तानां युवतीनां जीवितं कृन्तन् ॥२६॥
चैत्रोऽयं सखि ! मासः सम्प्राप्तोऽद्यापि न प्रियः प्राप्तः ।
उपवनपालः समयं कुसुम-विकासस्य जानाति ॥२७॥
भ्रमर-कुलं मधुपानं भ्रमण-परं सन्निरन्तरं कुरुते ।
सकलकलाविदपि प्रभुरधुना मे मूढतां यातः ॥२८॥
वैशाखे सखि ! रौद्रः सौरस्तापो मृतिव्यथां तनुते ।
कामिकुलं नन्वधुना विषमशरो निर्दयं हन्ति ॥२९॥
विरला तरुपत्राली छाया तस्मान्न शीतला लभ्या ।
ग्रीष्मे भीष्मे सवितरि का वार्त्ता वृष्टि-पातस्य ॥३०॥
चेतः कामशरव्यं वपुरपि नैदाघतापसन्तप्तम् ।
सखि ! मम पापमहिम्ना शैत्यविहीनं जगत् सर्वम् ॥३१॥

ज्येष्ठे मासि प्राप्ते लुप्ता परितः प्रसूनवैचित्री।
नयनोद्वेजनदक्षा सर्वत्राभाति धूसरता ॥३२॥
उपचिमनसिजदारुणसन्तापाविष्ट-मानसो नितराम्।
कामिजनः कामयते कान्ताजनसङ्गसौभाग्यम् ॥३३॥
गायति विद्यापतिकविरविरलचित्तव्यथापरामृष्टम्।
द्वादश-मास-व्याप्तं विरहिण्या जीवनं विषमम् ॥३४॥

## ८०

नीते वासरनिवहे कियति न जाने प्रयास्यति प्रशमम्।
हाहाकारोऽयं सखि! वधिरीकुर्वन् मम प्राणान् ॥१॥
नहि जाने सखि! दुर्वहभाराक्रान्तं कदा मम स्वान्तम्।
निर्वृतिमेष्यति दृष्ट्वा कान्तमुखं लोचनानन्दम् ॥२॥
कैरविणीमुपलभ्य प्रमोदकेलीरतः कदा चन्द्रः।
अन्तर्ध्वान्तं तस्याः करैर्विनेष्यत्यलं सरसैः ॥३॥
मधुपो मधुरं गुञ्जन् सम्भावयिता कदा मुदा परया।
मौनमुपेतामेकां सरोजिनीमार्त्तिसम्भिन्नाम् ॥४॥
सखि! न हि जाने कान्तः परदेशादेत्य सम्भ्रमाविष्टः।
प्रष्टा कुशलोदन्तं कियत्सु जातेषु दिवसेषु ॥५॥
सखि! तत्पाणिसरोरुहसंस्पर्शाल्लब्धभूरिसौभाग्यम्।
मम वक्षोजद्वन्द्वं भावि कदा सम्भृतं पुलकैः ॥६॥
बाष्पार्द्रं मे वदनं प्रोञ्छ्य मुदावेशविह्वलस्वान्तः।
धृत्वा ननु करयुग्मं नेष्यत्यङ्कं कदा कान्तः ॥७॥
समुपचिता बत! विरहे केलिकलाकल्पनानल्पा।
परिपूर्णा सखि! भविता कदेति जिज्ञासते चित्तम् ॥८॥
कथयति विद्यापतिकविरनुपमरूपे! श्रृणुष्व मद्वचनम्।
विलयमुपैष्यति तापो हरिरेष्यति नात्र सन्देहः ॥९॥

## ८१

सखि! रसिकः समुपेयाल्लोचनसरणिं कदाचिदपि नैव।
अथवा यदि समुपेयान्नोदयमासादयेत् स्नेहः ॥१॥
दैववशात् समुपेयादुदयं स्नेहो भवेन्न तद्विरहः।
विरहश्चेदथ भूयाद्दग्धं भूयाद् वपुस्तस्मिन् ॥२॥

कृष्णप्रेमकथां सखि ! दूरीकुरु पश्य निष्ठुरो धाता ।
प्रेमाङ्कुरप्ररोहे समुदञ्चति तं व्यधाद् भग्नम् ॥३॥
प्रीतिलता यदि दोषाद् दैवस्य क्वापि चेत् समुत्पन्ना ।
नैवेयं खलु भूयाद्रसिक-जनालम्बिनी जातु ॥४॥
निभृतं कृष्णे प्रीतिं बद्ध्वा पश्चादुपेक्षिता तेन ।
शिक्षेयं सखि ! लब्धा या शक्या नैव विस्मर्त्तुम् ॥५॥
ईदृशमौषधमस्मिञ्जगति सखि ! क्वापि लभ्यते नैव ।
येनेदं हतयौवनमाशु भवेद् भस्मसान्नियतम् ॥६॥
सामञ्जस्यविहीना सोढुमशक्येदृशी सखि ! प्रीतिः ।
श्रीकविशेखरविद्यापतिनेदं गीयते गीतम् ॥७॥

## ८२

आयास्यति मम रसिको यदाङ्गनं प्रोष्य चिरकालम् ।
स्मितपूर्वं तं दृष्ट्वा प्रस्थास्येऽहं पराङ्मुखी भूत्वा ॥१॥
समधिकरागावेशादाक्षेप्स्यति मे प्रियोऽञ्चलं तूर्णम् ।
विविधैरपि तद्यत्नैर्नाहं यास्यामि तत्सविधे ॥२॥
कञ्चुलिकायां प्रसभं करौ निधातुं समुद्यते कान्ते ।
सकटाक्षं पाणिभ्यामवरोधं संविधास्येऽहम् ॥३॥
सङ्गमसुखमुपलब्धुं प्रणयप्रवणं प्रियं समुद्वीक्ष्य ।
अभिधास्ये ननन्नैवं साचीकृत्याननं स्मेरम् ॥४॥
अथ रसिकोऽसौ मधुपो न चिराद्विज्ञाय साधु मदभीष्टम् ।
पास्यति मधु मम वदनाम्भोजलसत् सत्वरं नूनम् ॥५॥
विविधानङ्गविलासानन्दोर्मिलसागरे समाप्लाव्य ।
उपनेष्यति मां कामपि वीतद्वैतां मनोभूमिम् ॥६॥
इत्थं कलयति काचित् कान्तागमवार्त्तया भृशं मुदिता ।
विद्यापतिरभिधत्ते धन्ये धन्या तवाशंसा ॥७॥

## ८३

गोकुलपुरमायास्यति यदा मुकुन्दस्तदा मुदावेशात् ।
जयतूर्यध्वनिरुच्चैर्गेहे गेहे विधास्यते पौरैः ॥१॥
सौभाग्यादुपनीते तदवसरे मोदविह्वला कामम् ।
कान्तस्वागतकृत्यं सुललितमेवं विधास्येऽहम् ॥२॥
निस्तलरुचिमन्मौक्तिकहारैरालेपनं परं विशदम् ।
मङ्गलकलसस्थापनमुरोजयुग्मेन सम्पाद्यम् ॥३॥
श्यामस्तनमुखकान्त्या कर्त्तव्या चूतपल्लवाभिख्या ।
अङ्गसमुद्भवसौरभसारैर्धूपार्पणं कार्यम् ॥४॥
स्वाङ्गद्युतिसामग्र्या दीपालोकप्रदर्शनं रुचिरम् ।
उपभोगार्पणविधिना नैवेद्यस्यार्पणं रम्यम् ॥५॥
विलसदमन्दानन्दप्रभवैर्नयनोदबिन्दुभिः स्नपनम् ।
परिरम्भैर्ननु कार्या पूर्णा पूर्णाहुतिस्तत्र ॥५॥
एवं सविधिसपर्यापरितुष्टात् काममच्युतादिष्टम् ।
स्वगतमनोरथवरमिह लप्स्ये सेवाफलं भव्यम् ॥६॥
कथयति विद्यापतिकविरित्थं पूजाविधिं समालोच्य ।
भावोल्लासविमुग्धः सञ्जातेऽहं परं तृप्तः ॥७॥

●

## ८४

कृष्णध्याननिमग्ना राधा बिरहाकुलस्वान्ता ।
अवगच्छत्यात्मानं कृष्णं, विस्मृत्य रूपं स्वम् ॥१॥
माधव ! किमहं वच्मि स्नेहो नैतादृशः क्वचिद् दृष्टः ।
स्वतनुः स्वविरहदग्धा संशयितं जीवितं तस्याः ॥२॥
प्रातर्बाष्पाकुलया कातरदृष्ट्या सखीजनं दृष्ट्वा ।
अस्फुटवचसा ब्रूते राधाराधेति सोच्छ्वासम् ॥३॥
कृष्णमयी सा सुतनुस्तदनु व्यथमानमानसा भवति ।
राधाविरहोद्भूत— ज्वलनज्वाला परिष्वङ्गात् ॥४॥
अथ सा विरहोत्तप्ता दीना कृष्णाभिमानिनी राधा ।
ध्यायन्ती ननु राधां राधाभावं पुनर्याति ॥५॥

एवं राधाहमिति ध्यायति सुभ्रूर्यदा स्वमात्मानम् ।
कृष्णवियोगप्रभवां तदार्त्तिमात्यन्तिकीं धत्ते ॥६॥
राधाभावविशिष्टा राधा प्रेमाम्बुधौ सदा लीना ।
हे माधव ! हे कृष्णेत्येवं ब्रूते मुहुः खिन्ना ॥७॥
कृष्णध्यानपरा सा यदवधि कृष्णाभिमानिनी भाति ।
तदवधि मन्दं मन्दं निगदति राधेति राधेति ॥८॥
इत्थं विरहप्रभवाभीक्ष्णं तस्या विवर्धते पीडा ।
मनसि निरूढं प्रेम प्रथते नो भङ्गमायाति ॥९॥
इन्धनशकलस्योभयपार्श्वे ज्वलनेन दह्यमानस्य ।
मध्येऽवरोधभाजः कीटस्येव व्यथा तस्याः ॥१०॥



## ८५

ना जाने सखि वाञ्छा कस्माद्दिवसात् व्यजृम्भत स्वान्ते ।
प्रभुणा प्रीतिर्भूयान्निरन्तरं हारिणा हरिणा ॥१॥
वाञ्छावल्लरिरेषा जाता सौभाग्यसम्पदा सुफला ।
अद्य मदीये भवने सखि ! सम्प्राप्तः स्वयं कृष्णः ॥२॥
सहजमनोरथबन्धुं गेहे यत्नं विनैव सम्प्राप्तम् ।
दृष्ट्वा मम जनिरेषा सखि ! सफलाभून्न सन्देहः ॥३॥
विहसितशारदचन्द्रं धर्षितनीलोत्पलाभनयनान्तम् ।
वीतनिमेषमपश्यन्मम सखि ! वदनं हरिः प्रीतः ॥४॥
सन्तर्जितबिम्बद्युतिमधरमधीरं भृशं विलोकयता ।
कण्ठाश्लेषपुरस्सरमहमासं चुम्बिता तेन ॥५॥
सखि ! घनतुङ्गस्तनयोर्निर्दयमारोपयन् करौ कम्रौ ।
मामुपपीड्य स वक्षसि शैथिल्यं नीतवान् नीवीम् ॥६॥
नीवीबन्धे विगलति पुलकभरावेशविह्वलाभूवम् ।
कोऽयं काहमितीदं ज्ञानं सखि ! तत्क्षणाल्लीनम् ॥७॥
कथयति विद्यापतिकविरयि तव पुण्यस्य नैव तुलनास्ति ।
सकलगुणाभरणायास्ते ननु जन्माभवद् धन्यम् ॥८॥



८६

यावान् दुःखसमुदयो दत्तः क्रूरेण मेऽनिशं मधुना ।
प्रियवदनं पश्यन्त्या दूरीभूतः स निश्शेषः ॥१॥
अभिलाषश्चिरकालाद् योऽभूद् विरहोद्धुरो मम स्वान्ते ।
प्रियकृपया खलु सकलो यातः परिपूर्णतामचिरात् ॥२॥
सखि ! भूमानमुपेतस्यानन्दस्याद्य नैव सीमास्ति ।
आयातो मम भवने चिरकालानन्तरं कृष्णः ॥३॥
सरभसतत्परिरम्भणसमुदितपुलकोत्करानुविद्धाङ्गी ।
तदधरसुधां निपीय व्यपगततापास्मि सञ्जाता ॥४॥
विधापतिरभिधत्ते नातः परमाधिसम्भवं दुःखम् ।
समुचितभेषजयोगाद् व्याधिः स्थातुं न शक्नोति ॥५॥

●

८७

एकाकिन्यहमासं भवने हारस्य गुम्फने लीना ।
वक्षोंऽशुकमगलन्मे मन्दानिलकम्पनावेशात् ॥१॥
अथ निभृतं समुपेते सस्मितवदनं मदन्तिकं कान्ते ।
नीवीबन्धोऽप्यगलत् कुचसंवरणस्य का वार्त्ता ॥२॥
रसिकः सखि मम कान्तोऽसंवृतमालोक्य मत्स्तनद्वन्द्वम् ।
लज्जारक्षां कृतवान् पिधाय तत् कम्प्रपाणिभ्याम् ॥३॥
किं वच्मि किं ममाभूच्चेतसि तस्मिन् क्षणे न जानामि ।
भावोच्छ्वासाविष्टा जाताहं पुलक-सम्भृता कामम् ॥४॥
दयितेनासं गाढं परिरब्धा प्रीतिविह्वलस्वान्ता ।
लज्जा विलयमुपेता धैर्यञ्चासीत् परिस्रस्तम् ॥५॥
विद्योतितभवनान्तरमतिदूरस्थं प्रभास्वरं दीपम् ।
शमयितुमासमशक्ता पाणिसरोजाहतैरनिलैः ॥६॥
आनन्दाब्धिः परितो यथा तदाभूत् प्रकाममुद्वेलः ।
ननु सोऽनुभवो हे सखि ! वचसां सीमानमत्येति ॥८॥

नीलसरोरुहयुग्मं मीलितमासीत् ततः परिम्लानम् ।
किसलय-रागमनोज्ञः स्मितविच्छुरितोऽधरो जातः ॥६॥
भणति कविर्विद्यापतिरस्य रहस्यं रसज्ञसंवेद्यम् ।
यस्मै जीवितमर्पितमुदेति लज्जा कुतस्तस्मात् ॥१०॥



## ८८

अद्यतनी सखि ! रजनी सौभाग्येनातिवाहिता नितराम् ।
प्रियमुखचन्द्रमपश्यं नीत्वा विरहावधिं दीर्घम् ॥१॥
जीवितमधुना सफलं यौवनमपि सार्थकं ममाभाति ।
दिग्वलयं खलु सकलं निर्द्वन्द्वं साम्प्रतं जातम् ॥२॥
अधुना भवनं भवनं देहो देहश्च सम्यगाभाति ।
दिष्ट्या विधिरनुकूलो लुप्तोऽशेषोऽपि सन्देहः ॥३॥
विरहे शीतकरोऽसौ दाहकरोऽभूद व्यथां वितन्वन् मे ।
सम्प्रति दशसाहस्री तस्यैवोदेतु नो चिन्ता ॥४॥
सहकारस्याभिनवां सरसामास्वाद्य मञ्जरीं मत्ता ।
कलकूजनमभ्यस्यतु सम्प्रति सततं पिकश्रेणी ॥५॥
इषुभिः पञ्चभिरेव व्यथां पुरा यो व्यधात कुसुमचापः ।
अधुना स एव कलयतु लक्षेपुत्वं न मे भीतिः ॥६॥
प्रियपरिरम्भणजन्मानन्दानुभवोत्सवं समासाद्य ।
विगलितदारुण-तापं मम वपुरधुना बिभर्त्ति सार्थक्यम् ॥७॥
विद्यापतिरभिधत्ते नूनमनल्पं बिभर्षि सौभाग्यम् ।
राजति तव ननु धन्ये विरहेण नवीकृता प्रीतिः ॥८॥



## ८६

जागृहि माधव ! जागृहि शृणु मे वचनं त्यजाशु वसनान्तम् ।
रजनी सम्प्रति शीर्णा वेला विगता विलासस्य ॥१॥
चञ्चत्किरणसमृद्धो दीपालोकः प्रयाति दारिद्र्यम् ।
गगनं प्रसरदरुणरुचिरञ्जितमाभाभरं धत्ते ॥२॥

पर्युषितो नन्वधरे ताम्बूलास्वादसम्भवो रागः ।
सुमनोदामेदं मे वक्षसि नो कान्तिमातनुते ॥३॥
अधिगगनं च्युतिशीलास्तारा नैवाधुना विभाव्यन्ते ।
कूजन् कोकिलसार्थः प्रभातवैतालिको भ्रमति ॥४॥
नियतिवशात् प्रियतमया हीनो दीनो रथाङ्गविहगोऽसौ ।
कृत्वा कूजनकृत्यं निरुत्तरं मूकतामागात् ॥५॥
समदमयूरव्रातो मेचकरुचिपिच्छभारशोभाढ्यः ।
परिहृतकेकानादो जातो वाचंयमः कामम् ॥६॥
उन्मीलय ननु नयने लोकय शीतद्युतिर्नभः-प्रान्ते ।
विगलितरश्मिप्रकरो मालिन्यं साम्प्रतं धत्ते ॥७॥
सायं पङ्कजकोषे कान्तं भ्रमरं निरुद्धमुपलभ्य ।
भ्रामं भ्रामं भ्रमरी प्रतिपद्मं तं विमार्गयति ॥८॥
गच्छति गोचरभूमिं गोप्रसरो निर्गतोऽधुना घोषात् ।
प्रोषितमिन्दुं लब्ध्वा कुमुदिन्यपि मुद्रिता जाता ॥९॥
एभिर्लक्षणनिवहैः प्रातःकालोऽभिलक्ष्यते प्राप्तः ।
मुञ्च ममाञ्चलमधुना गणयित्वा लोकलज्जां मे ॥१०॥
कान्तारुचिमनुसरति प्रीत्यनुरोधात् मुदा सदा कान्तः ।
हठभृति जाते कान्ते रसभङ्गो जायते विषमः ॥११॥
मदनमहिम्ना पुनरपि समागमो नूनमावयोर्भावी ।
शिथिलीकुरु भुजपाशं प्रियतम ! दीनाधुना याचे ॥१२॥
कथयति विद्यापतिकविरियमच्युत ! शिष्टगर्हिता रीतिः ।
सकलं जगदिदमधुना नितरां वितनोति ते निन्दाम् ॥१३॥



९०

पृच्छसि हे सखि ! किं मां प्रीत्यनुभूतिस्वरूपवैशिष्ट्यम् ।
तत् प्रीतिरुच्यते यन्ननुक्षणं नूतनं भाति ॥१॥
जन्मावधि खलु रूपं निभालयन्ती स्थिता प्रियस्याहम् ।
नयनाभ्यां न मनागपि सम्प्राप्ता तृप्तिरद्यापि ॥२॥

मधुमयवचनमजस्रं कान्तस्याकर्णितं मया सततम् ।
किन्तु प्रतिभात्येवं यन्निःशेषं श्रुतं नैव ॥३॥
मधुयामिन्यः कति कति नीताः सुरतोत्सवोन्मदावेशात् ।
किं वच्मि, नैव विदितं केलिः सखि ! कीदृशी भवति ॥४॥
लक्षाधिकयुगविततं कालं यावद्धृतः प्रियो हृदये ।
हृदयं बत ! परितप्तं तेनापि न शीतलं जातम् ॥५॥
रसभरतरलस्वान्ताः सन्ति विदग्धाः सहस्रशो भुवने ।
तत्त्वं किमपि निगूढं ज्ञातं प्रेम्णो न केनापि ॥६॥
विद्यापतिरभिधत्ते लक्षेष्वपि नैव कश्चिदप्येकः ।
लब्धो येन ममेदं दग्धं चेतो भवेत् सरसम् ॥७॥



## ६१

नवकिसलयदललसितैर्नूतनकुसुमोत्करप्रभादीप्तैः ।
नवतरुवृन्दैर्वृन्दावनमिह शोभां नवां तनुते ॥१॥
भाति वसन्तोऽभिनवो मलयसमीरो विभाति सुकुमारः ।
मधुपकुलं मधुलम्पटमधुना जातं मदोन्मत्तम् ॥२॥
तपनतनूजापुलिने रम्यनिकुञ्जोल्लसद्वनाभोगे ।
प्रेमावेशाविष्टो विहरति नव्यो युवा कृष्णः ॥३॥
नवलरसालोपवने नवमधुनिष्यन्द-सम्भृतं मुकुलम् ।
स्वादं स्वादं गायति मत्ताभिनवा पिकश्रेणी ॥४॥
श्रावं श्रावं गीतं मन्मथसन्देशसम्भृतं श्रव्यम् ।
नवयुवतीनां कामं मनांसि जातानि मत्तानि ॥५॥
नवलवधूटीवृन्दं धावति विपिने समुत्सुकं परितः ।
नेतुं नयनातिथितां कुञ्जनिलीनं मुरारातिम् ॥६॥
कुञ्जोत्सङ्गगतास्ता मिलिताः कृष्णेन चित्तचौरेण ।
नवनवभातन्वन्ति स्मरतन्त्रं विभ्रमाविष्टाः ॥७॥
वृन्दावनयुवराजः कृष्णो नव्यः स्मितोल्लसद्वदनः ।
कामिन्यश्च नवीना विभान्ति हर्षोच्छलस्वान्ताः ॥८॥

सङ्गमरीतिर्विविधा प्राणोत्तापापहारिणी दिव्या ।
परमानन्दोपायनसारा रागानुगोदेति ॥९॥
सततं नवनवमेवं रसभररम्यं समागमं पश्यन् ।
विद्यापतिकविरधिकं दिव्योन्मादेन सम्भृतो भाति ॥१०॥

६२

द्रिमिद्रिमिधौद्रिमिद्रिमिद्रिमिनादं मुरजाहतिप्रभवम् ।
समनुसरन्ती नृत्यति कृष्णसनाथा मुदा राधा ॥१॥
कङ्कणकाञ्चीनूपुरसिञ्जनमिश्रैर्मनोहरैर्ध्वनिभिः ।
मर्दलडिण्डिमनादोल्लसितैर्व्याप्तं दिगन्तरं भाति ॥२॥
करतलदत्तोत्तालध्वनिलहरीराजिसङ्गते नृत्ये ।
विलसति गोपवधूटीवृन्दैरभितो वृतः कृष्णः ॥३॥
स्वरमण्डलसंवलितैर्गीतैर्भावप्रपञ्चनोद्युक्तैः ।
नृत्यं प्रहतमृदङ्गध्वनिरम्यं राजतेऽतितराम् ॥४॥
मदनोर्जितबहुभावा रासव्यासङ्गविह्वला गोप्यः ।
विलुलितकबरीरम्याः स्वेदाश्लिष्टानना भान्ति ॥५॥
कथयति विद्यापतिकविरित्थं व्यावर्णयन् महारासम् ।
मामकमानसजलधिर्मोदतरङ्गैः समुच्छलो भवति ॥६॥

६३

अद्भुतमेकं दृश्यं हे सखि ! दृष्टं मयाद्य सविशेषम् ।
किन्तत् स्वप्नविलासः प्रत्यक्षं वेति नो वेद्मि ॥१॥
दृश्यं तन्न समीपे न चैव दूरे परिस्फुटं भाति ।
कथयितुमस्मि न शक्तस्तत् खलु विशदाक्षरं सर्वम् ॥२॥
सघनश्यामलमेघो तडिल्लनायास्तलेऽस्ति सम्प्राप्तः ।
तरला सुरसरिदमला प्रवहति कामं तयोर्मध्ये ॥३॥

सार्द्धं शशिना सूर्यस्तमसा ग्रस्तो न दृष्टिमभ्येति ।
परितः पतितो भाति प्रविकीर्णस्तारकानिकरः ॥४॥
अम्बरमस्ति निपतितं पातमुपेता ह्यधोमुखाः शैलाः ।
कम्पनविवशा वसुधा नितरां दोलायतेऽशेषा ॥५॥
अनुभूयन्ते सततं वेगाध्माताः समीरणाः प्रबलाः ।
संरावैर्भ्रमराणां मेदुरमखिलं नभश्चक्रम् ॥६॥
प्रणयपयोनिधिपयसामोघेनाप्लावितं वपुर्जातम् ।
किन्तु प्रलयो नायं यद्यपि तल्लक्षणं भाति ॥७॥
भणति कविर्विद्यापतिरत्र हि विपरीतमेव ननु कथितम् ।
कः प्रत्येष्यति लोके कथामिमामीदृशीं चित्राम् ॥८॥



## ६४

तप्ते सैकतनिकरे जलबिन्दुरिव द्रुतं लयं याति।
सुतसखिरमणीवर्गो, जगदखिलं भङ्गुरं भाति ॥१॥
विस्मृत्य त्वाममवद् व्यासक्तं मे मनोऽनिशं तस्मिन्।
जीवनपरिणतिकाले माधव ! जातो निराशोऽहम् ॥२॥
जगतस्तारणकर्मणि निपुणस्त्वं कर्णधारोऽसि।
दीनेषु ते दयापि प्रथिता तेनास्मि विश्वस्तः ॥३॥
जन्मार्धं प्रतिरजनि स्वापपरेणैव यापितं सकलम्।
शैशवमपगतमादौ प्राप्तेदानीं जरा जीर्णा ॥४॥
रमणीभिः सह केलिषु तरुणिमसमये मदालसोऽभूवम्।
सम्प्रति कदा भजिष्ये त्वामिति नो वेद्मि सम्मूढः ॥५॥
कति कति यास्यन्ति लयं धातारो नास्ति तद्गणना।
एकस्त्वं कूटस्थो नादिर्नान्तश्च ते नाथ ! ॥६॥
त्वत्तो लब्ध्वा जन्म त्वय्येवामी पुनर्विलीनाः स्युः।
यद्वत् सागरलहरी सागर एवाशु लयमेति ॥७॥
विद्यापतिरभिधत्ते शेषे प्राप्तं यमाद् भयं सुमहत्।
दूरीकर्त्तुं प्रभवति नान्यस्त्वं केवलं शरणम् ॥८॥
आद्यनादिसकलामरसार्थस्यैकस्त्वमेव नाथोऽसि।
विनिहिततारणभारस्त्वय्येवाहं न मे भीतिः ॥९॥

## ६५

विविधैः पापमयैरिह माधव ! यत्नैर्यदर्जितं वित्तम्।
परिजनवर्गः सकलो भुङ्क्ते तन्मामनादृत्य ॥१॥
सम्प्रति मृत्यौ प्राप्ते कुशलं कश्चिन्न वेत्तुकामो मे।
शेषे कर्म कृताकृतमेकं यात्यात्मना सार्द्धम् ॥२॥
पापपयोनिधिपारं गन्तुमुपायो न कश्चिदन्योऽस्ति।
तव पदतरणिं त्यक्त्वा तस्मात्तेऽहं भजे चरणौ ॥३॥
इह जन्मनि तव चरणौ नैव कदाचिन्न्यवेशयं हृदये।
युवती-वासित-चित्तो जातः कामेन सम्मूढः ॥४॥

कथममृतं त्यक्त्वाहं हालाहलपानलोलुपोऽभूवम् ।
नो जाने, बत ! जाने सम्पद् विपदोऽभवद्धेतुः ॥५॥
कृत्यमशेषं त्यक्त्वा नीत्वा गल्पेन चाखिलं दिवसम् ।
सायं भृतकं लिप्सुर्भृत्य इवास्मि त्रपानम्रः ॥६॥
भणति कविर्विद्यापतिरच्युतपादावलम्बनं कार्यम् ।
प्रवचनमखिलं विफलं न तेन काचिद् भवेत् सिद्धिः ॥७॥

●

९६

कुत्र गतं मम बाल्यं यौवनमपि रम्यविभ्रमाविष्टम् ।
देहं मत्वाभीष्टं तत्सेवायां वयः क्षिप्तम् ॥१॥
पायं पायं जननीस्तन्यं बाल्यं निरन्तरं नीतम् ।
भोज्यैस्तदनु मनोज्ञैर्वपुरेतच्चारुतां नीतम् ॥२॥
तारुण्ये संसक्तो वनिताकनकादिभोग्यसङ्कलने ।
रमणीश्रीफलयुगलच्छायासौख्येन सम्मूढः ॥३॥
यस्य कृते गार्हस्थ्यं प्रतिपन्नोऽभीक्ष्णमुच्छ्रितोत्साहः ।
अधुना सकलमसारं तत्खलु मे काममाभाति ॥४॥
सम्प्रति मूर्धजजालं पालित्याश्लेषनिष्प्रभं रुक्षम् ।
जीर्णद्रुमचयनिचितं वनमिव दुर्दर्शनं जातम् ॥५॥
विकला दृष्टिः शिथिला श्रुतिरपि रम्यं वपुश्च संशुष्कम् ।
दन्तावलिसंशून्यं वक्त्रं जातं परं विकृतम् ॥६॥
प्राणायामपुरस्सरमहमीहे साम्प्रतं मनो रोद्धुम् ।
कासश्वासविरुग्णस्तथा विधातुं न शक्तोऽस्मि ॥७॥
हे मन्मानसमधुकर ! लौल्यं हातुं तवागतः कालः ।
मधुसहिते मधुहीने चापि भ्रमतः सुमव्राते ॥८॥
भणति कविर्विद्यापतिरलमधुना चित्त ! चिन्तयित्वान्यत् ।
कुरु हरिहरपदचिन्तनमवसादो यास्यति क्षिप्रम् ॥९॥

●



## ६७

मम जीवोनन्वधुना सत्वरमाभाति गन्तुमुद्युक्तः ।
चित्तमतीवोत्तप्तं विचिन्त्य भूयः स्वकं चरितम् ॥१॥
पुत्रकलत्रसहोदरवर्गाश्चान्ये च बान्धवाः सर्वे ।
प्राप्ते वयसः शेषे प्रतारणामात्रपरमार्थाः ॥२॥
नाथस्त्वं मम भगवन् नातो युक्ता त्वया ममोपेक्षा ।
हे शिव भूयो भूयो याचे त्वां देहि मे शरणम् ॥३॥
यानि मयास्मिञ्जन्मनि कृतानि नानाविधानि कर्माणि ।
तेषां गणनावसरे मर्षय कलुषाणि कृत्यानि ॥४॥
पापमये बत ! मार्गे विनियुक्तोऽहं त्वयैव हे नाथ !
पुण्यमये ननु मार्गे चलितुं नो मे मतिर्दत्ता ॥५॥
परकीये धननिचये बत ! परकीयासु नारीषु ।
संसक्तं मम चित्तं तृष्णातरलं सदा जातम् ॥६॥
पश्चात्तापोच्छ्वासादधुना दीर्घादतीव सन्तप्तः ।
व्यर्थं जन्म समस्तं गतमिति भूयो विचिन्त्यास्मि ॥७॥
अनवहितोऽहं विहरन् मदनग्राहेण निर्भरं झटिति ।
निगृहीतो वैवश्यादपतं भवसागरे विषमे ॥८॥
किमसत्कर्म च किं सन्नैतत् किञ्चिद् विवेक्तुमलमासम् ।
मोहाच्छन्ने मार्गे चरताशेषं वयः क्षिप्तम् ॥९॥
किमिदानीं बत ! कार्यं मृत्यौ सान्निध्यभाजि करणीयम् ।
नास्त्यवकाशस्तनुकोऽप्यधुना मां रक्ष रक्षाशु ॥१०॥
कथयति विद्यापतिकविरस्ति क्षान्तिश्रिया भृतो देवः ।
गिरिजाकान्तः शम्भुस्तस्मात् तं याम्यहं शरणम् ॥११॥



## ६८

जीवनसन्ध्याकाले विद्यापतिरीप्सुरात्मनो मुक्तिम् ।
कामयते निष्कामो हरिहरकरुणातरङ्गितां दृष्टिम् ॥
विनतिपुरस्सरमेषा हे माधव मेऽस्ति याचनाभीक्ष्णम् ।
स्वीकुरु मम तिलतुलसीसहितं दत्तं वपुस्तुभ्यम् ॥१॥

त्वमसि प्रथितो नितरां संसारेऽस्मिन् दयामयो देवः ।
याचे भूयो भूयो मयि नो हेया दया जातु ॥२॥
गणयिष्यसि मम चरितं यदि, गुणलेशं न लप्स्यसे कञ्चित् ।
सङ्ख्यातीतैर्दुरितैर्मम चरितं सर्वथाक्रान्तम् ॥३॥
विदितस्त्वं संसारे जगतां नाथोऽत एव याचे त्वाम् ।
मा सन्त्यज मां बहिरिह मामपि मत्वा जगन्निष्ठम् ॥४॥
कर्मविपाकवशादिह लब्धव्यं जन्म नैकशो जगति ।
मानवपशुखगयोनिष्वास्तां त्वयि मे सदा भक्तिः ॥५॥
विद्यापतिरतिकातरचित्तस्तव पादपल्लवालम्बम् ।
प्रार्थयते भवसिन्धुं तरीतुमत्यर्थमुद्विग्नः ॥६॥

## ९९

हे शिव ! कदा हरिष्यसि मम दुखं घोरसंसृतिप्रभवम् ।
नाहमिदं बत जाने कदा त्वदीया कृपा भविता ॥१॥
दुःखे जनिरुपलब्धा दुःखेऽतीतं जनुर्ममाशेषम् ।
स्वप्नेऽपि क्षणमात्रं सुखमन्वभवं प्रभो ! नैव ॥२॥
अक्षतचन्दनसंयुतगङ्गाजलबिल्वपत्रसम्भारैः ।
तव पूजाविधिनिरतः सदा भविष्याम्यहं नाथ ! ॥३॥
अतिविषमो भवसिन्धुर्न तलस्पर्शोऽस्य लभ्यते जातु ।
सत्वरमेत्य मदीयं भैरव ! बाहुं गृहाण त्वम् ॥४॥
भणति कविर्विद्यापतिरस्ति ममैकं महेश्वरः शरणम् ।
याचे भूयो भूयो देहि वरं मेऽभयं शम्भो ! ॥५॥

## १००

त्वमसि त्रिभुवननाथः सकलैश्वर्येण सम्भृतो देवः ।
अहमेकाकी दीनो हे शिव ! कालुष्यनिर्मग्नः ॥१॥
नो विधिविहितमनुष्ठितमुचितं किञ्चित्कदाचिदपि कृत्यम् ।
पापवशीकृतमनसा न मया तप्तं तपः किञ्चित् ॥२॥

मध्येधारं नौका प्रवाहवेगेन नीयते दूरम् ।
भैरव ! तूर्णमरित्रं गृहाण वेलातिवर्त्तते त्रातुम् ॥३॥
सागरसम्मितमेतद् दुष्पारं मां प्रबाधते दुःखम् ।
अधुनाप्येत्य विधेहि प्रविधेयमलं विलम्बेन ॥४॥
भणति कविर्विद्यापतिरनिशं दुःखाभिघातहतचेताः ।
त्रायस्वास्मादचिरं क्लेशोर्मिमयाद् भवाम्भोधेः ॥५॥







## १०१

हरगौरीसम्बद्धा विद्यापति-गीत-राजयः ख्याताः ।
मैथिलभक्तैर्गीताः काश्चिदिहानूदिताः सन्ति ॥

पतिमप्राप्य विषण्णा गौरी गेहे भृशं विचिन्तयति ।
रुष्टो भूत्वा देवो विहाय मां निर्गतः क्वापि ॥१॥

पृच्छति भूयो भूयो पथिकानौत्सुक्यविह्वला गौरी ।
कच्चित् क्वचिदपि दृष्टो वृद्धः पान्थो न वा कश्चित् ॥२॥

व्याघ्राजिन-परिधानस्त्रिशूलपाणिर्जटाटवीमौलिः ।
डमरुनिनादं कुर्वन् भैक्ष्यपरः सर्वदा भ्रमति ॥३॥

अनुपमभस्मच्छुरितं सर्वाङ्गं भाति तेजसा तस्य ।
योगिजनस्य सरूपं वच्मि कियत् तस्य वैशिष्ट्यम् ॥४॥

कथयति विद्यापतिकविरधुना खेदाकुला भृशं गौरी ।
शिवसन्दर्शनहीना बिभर्त्ति चित्तेन विक्षेपम् ॥५॥

●

## १०२

कुत्र गतो दिग्वसनो देवो मम नैव वेत्तुमीशास्मि ।
किमवस्थः स इदानीमिति मे चिन्ता भवत्यनिशम् ॥१॥

पोटलिकायां विजयामप्राप्यासौ भृशं रुषाविष्टः ।
अथ पुनरानीतां तां मया विलोक्याभवन्मुदितः ॥२॥

देवनिवासोद्देशं यो मेऽत्राभ्येत्य वक्ष्यति क्षिप्रम् ।
करकङ्कणमतिरुचिरं नियतं तस्मै प्रदास्यामि ॥३॥

शिवमन्वेष्टुं चलिता नन्दनवनमभ्युपागता गौरी ।
लब्ध्वा तत्र महेशं हृष्टा जाता गतक्लेशा ॥४॥

कथयति विद्यापतिकविरहमपि मृगये तमेव देवेशम् ।
अपि भुवनत्रयराज्यं न हि मे काम्यं विना तेन ॥५॥

●

## १०३

भिक्षाचरमभिवीक्ष्य प्रथमपतिं सर्वदात्मनः कान्तम् ।
रहसि कदाचिद् गौरी करोति विज्ञापनां प्रेम्णा ॥१॥
हे शिव ! भूयो भूयः कथयामि त्वां कुरुष्व कृषिकर्म ।
त्वं भिक्षाटन-सक्तो मद्वचने नादरं कुरुषे ॥२॥
निश्शङ्कं सर्वत्र प्रविचरतस्ते कपालमादाय ।
गुणगणगौरवमखिलं नश्यति निन्दां जनस्तनुते ॥३॥
नितरां निःस्वोऽसाविति हे शिव ! लोकोपहासमुपलभसे ।
तावकमादरमुचितं नैव कदाचिज्जनः कुरुते ॥४॥
निर्धनताया विषमं फलमिदमवलोकय स्वयं शम्भो !
धत्तूरं तव भाग्ये पतितं, विष्णोस्तु चम्पकं रुचिरम् ॥५॥
भङ्क्त्वेदं खट्वाङ्गं निर्माय हलं कृषिक्षमं सुदृढम् ।
भित्त्वा त्रिशूलमेतत् फालं कुरु सत्वरं रुचिरम् ॥६॥
वृषभमिमं हलकर्षणकर्म्मणि हे शिव ! नियोजयेदानीम् ।
आस्ते सन्निहितेयं गङ्गा क्षेत्राणि सेक्तुमलम् ॥७॥
विद्यापतिरभिधत्ते यद्वा तद्वात्र जीवने भवतु ।
परजन्मनि पुनरीश ! त्वत्सान्निध्यं सदा भूयात् ॥८॥

●

## १०४

अद्य ममैकं प्रणयं पूरय नाथ ! प्रमोदमेष्यामि ।
अङ्गीकुरु नटवेषं डमरुकनादो नभः स्पृशतु ॥१॥
गौरि ! त्वं मां नृत्तं प्रविधातुं दिशसि किन्तु नो वेत्सि ।
जायन्ते मम हृदये विषमाश्चिन्ताश्चतस्रो याः ॥२॥
नृत्तविधौ प्रारब्धे करिकृत्तिनखक्षतेन्दुनिर्गलितम् ।
अमृतमिह प्रविदध्याद् व्याघ्राजिनमाशु सप्राणम् ॥३॥
व्याघ्राजिने सजीवे जाते विषमा विपत् पदं दध्यात् ।
वाहनवृषभं न चिरात् क्षुधितो व्याघ्रः समश्नीयात् ॥४॥
शीर्षात् स्रस्तः सर्पो मुक्तः सहसा महीतले विचरेत् ।
षण्मुख-पोषित-बर्हिण-वदनग्रासो भवेत्तियतम् ॥५॥






उच्छलिता तु कपर्दाद् गङ्गा धारा-सहस्रतां गत्वा ।
वसुधां मग्नां कुर्यात् सा नो शक्या निराकर्त्तुम् ॥६॥
मुण्डमयीयं माला वेगोत्क्षेपेण खण्डनं लब्ध्वा ।
नूनं निपतेदवनौ नृत्येयुर्भूत-वेतालाः ॥७॥
दृश्यादस्मादुग्रादुद्विग्ना त्वं भयातिरेकेण ।
सद्यो यास्यसि दूरं नृत्तं मे गौरि ! का पश्येत् ॥८॥
विद्यापतिना गीतं गीतमिदं श्रावितञ्च भक्तेभ्यः ।
जगदवनं विदधानः प्रणयं गौर्याः शिवो व्यधात् पूर्णम् ॥९॥

●

१०५

अहमीहे शिव गन्तुं तातगृहं साम्प्रतं मनोलग्नम् ।
प्रतिपदि यात्रां कृत्वा प्रस्थास्येऽहं द्वितीयायाम् ॥१॥
अध्वनि सकलेऽविरतं यात्रा कार्या तिथौ तृतीयायाम् ।
कज्जलरञ्जनमक्ष्णोस्तिथौ चतुर्थ्यां मया कार्यम् ॥२॥
पञ्चम्यां निजदेहे विलेपनं रम्यसौरभोल्लसितम् !
बिल्वमहीरुहमूले षष्ठ्यां वासं विधास्येऽहम् ॥३॥
नवपत्रीदलसहिता मण्डपमेष्यामि देव ! सप्तम्याम् ।
अष्टम्यां बलिदानं रात्रौ लप्स्ये महापूजाम् ॥४॥
बहुविधपशुबलिदानं वाद्य-समेतं त्रिशूलिनीपूजाम् ।
लब्ध्वा प्रमुदितचित्ता तिथौ नवम्यां भविष्यामि ॥५॥
भक्तेभ्यः प्रणमद्भ्यो नवनिधिजातं प्रदाय सम्प्रीत्या ।
कलसोत्थापनकृत्यं तिथौ दशम्यां मयालोक्यम् ॥६॥
कथयति विद्यापतिकविरेवमुमा श्री-सदाशिवं प्रोच्य ।
निगदति तदनु भजिष्ये स्वनिकेतं मोदनिमग्ना ॥७॥

●

१०६

देह-विसर्जनकालं ध्यानस्थेनागतं द्रुतं मत्वा ।
विद्यापतिना गीतं गीतमिहानूद्यते ख्यातम् ॥
अद्य मलीमसवसनं शिवसिंहं भूपतीन्द्रमतिमान्यम् ।
द्वात्रिंशन्मिवर्षानन्तरमालोकयं स्वप्ने ॥१॥

दिवमुपयातस्थ चिरान्मान्यजनस्यावलोकनं स्वप्ने ।
निधनसमयमासन्नं द्रष्टुर्नियतं समाख्याति ॥२॥

पुत्रि ! क्वास्ते जननी तवाधुना तां द्रुतं समाचक्ष्व ।
शिरसा सरसि स्नात्वा शीघ्रं साभ्येतु मत्पार्श्वम् ॥३॥

सा नन्वधुना कलयतु दृशा निकामं सतत्त्ववोधिन्या ।
संसारस्य विलासं सर्वं वैयर्थ्य—संसृष्टम् ॥४॥

जगदिदमखिलं नानात्रासपरामृष्टमतिविषमम् ।
जीवितमत्र क्षणिकं दुःखव्यालेन सन्दष्टम् ॥५॥

मातापितरौ सद्गतिमिह पुण्याच्चेल्लभेयाताम् ।
सन्ततिर्निरनुपमसौख्यं लभेत नैवात्र सन्देहः ॥६॥

लोचनसलिलमपाकुरु, मा कुरु शोकं, निधेहि हृदि धैर्यम् ।
स्थिरमिह कमपि न कुरुते क्रूरः सर्वङ्कषः कालः ॥७॥

उपदिश्यैवं सकलं स्वजनं जगतो विनश्वरीं नियतिम् ।
विद्यापतिरुपयातो भव्यं भागीरथीपुलिनम् ॥८॥

ख्याते कार्त्तिकमासे धवले पक्षे तिथौ त्रयोदश्याम् ।
विद्यापतिना लब्धं यशःशरीरं चिरस्थायि ॥९॥



## ग्रन्थकृत्-परिचयः

मिथिलादेशावयवसहर्षाप्रमण्डलान्तर्गत चयनपुर ग्रामवास्तव्यो मिश्रोपाह्वः श्रीकाशिनाथशर्म्मा व्योमाग्निग्रहविधुसम्मिते खीष्टाब्दे मैथिल सद्विप्रकुले लब्धजन्मा पारम्पर्यक्रमागतां संस्कृतशिक्षा पद्धतिमनुसृत्य व्याकरणं साहित्यञ्च समधीत्योभयत्र लब्धाचार्यपदवीको नवीनाञ्च शिक्षापद्धतिमनुसृत्य एम० ए० परीक्षां संस्कृते समुत्तीर्य पी० एच० डी-समाख्यं शोधमूलकम् उपाधिं लब्ध्वा विविधेषु विद्यापीठेषु संस्कृत विभागाध्यक्ष– पदमध्यास्य विधुग्रहनन्देन्दुसम्मिते खीष्टाब्दे निवृत्ताध्यापनः साम्प्रतं पाटलिपुत्रमधिवसन् स्वाध्यायेन समयं यापयन्नास्ते ।

**Rs. 95-00**

